एत्र ।

सकृत्प्रयुक्तमेकमेव पदं यत्राऽनेकार्थवाचकं तत्रापि श्लेष इत्युदाहरति--

शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
शं योरभि स्रवन्तु नः ॥　　ऋ. १०।९।४

देवता आपः । ऋषिः--त्वष्टृपुत्रस्त्रिशिराः । छन्दः--गायत्री । देवीः आपः दिव्या आपः । नः= अस्माकं सन्तापापनोदद्वारेण । शं भवन्तु=सुखाः सन्तु । अभिष्टये=अस्माकं यज्ञादिसंपादनाय अभिमतसाधनाय वा भवन्तु । ता नः पीतये= पानाय तृप्तये वा भवन्तु । तथा च नः शं भवन्तु= उत्पन्नानां रोगादीनां शमनकारिण्यो भवन्तु । योः भवन्तु=यावनाय=अनुत्पन्नानां कष्टानां भाविनामित्यर्थः प्रागेव दूरीकरणाय च भवन्तु । नः अभि स्रवन्तु=अस्मान् अभिलक्ष्य सर्वतः सुखवृष्टिमिव कुर्वन्तु । ब्रह्मयज्ञे सन्ध्योपासनकर्मणि विनियुक्तं मन्त्रमिमं पठन् उपासकस्त्रिराचामति । आचमनाङ्गभूतत्वादिह 'आपः' पदं जलार्थकम् । किन्तु मन्त्रस्यास्य ब्रह्मयज्ञे विनियोगात् परमात्मदेवताकत्वाच्च तदेवापः पदं परमात्मार्थकम् । तदुक्तं यजुर्वेदे--तदेवाग्निस्तदादित्यस्तद् वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ॥ यजु. ३२।१ । देवताः=परमात्मा । ऋषिः=स्वयम्भु ब्रह्म । छन्दः=अनुष्टुप् । एवमुभयोरर्थयोः प्रासङ्गिकत्वात्पदमिदमुभयार्थकम् । तेनाऽत्र श्लेषः । यथा--सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः । नयोपकारसांमुख्यमायासि तनु वर्तनम् । साहि. द. १०।११ । राजपुरुषैर्निगृहीतस्य चौरस्य शिवं प्रति तदैव संमुखागतं स्वपुत्रं प्रति च वचनमिदम् । जलार्थकेषु परमात्मार्थकेषु च पृथक् पृथक् पदेष्वनेकेषु सत्स्वपि 'आपः' इत्येकपदप्रयोगे किं प्रयोजनमिति चेत् यथा शीतलानि जलानि शरीरमभिव्याप्य तत्रत्यं सकलसन्तापं शमयन्ति तथा आपोरूपः स भगवान् नो बाह्यमाभ्यन्तरं च सर्वं सन्तापं शमयतीत्यापःपदेन व्यज्यते । अत एव कश्चिदाह--

निराकारं भजन्त्येके नराकारमथाऽपरे ।
वयं संतापसंतप्ता नीराकारं भजामहे ॥

इह आपः पदं जलार्थे रूढम् । आपः स्त्रीभूम्नि वा वारि सलिलं कमलं जलम् । इत्यमरः । भगवदर्थे तु व्याप्नोते यौगिकम् । अत्र परिकराङ्कुरालंकारः--'साभिप्राये विशेष्ये तु, भवेत् परिकरांकुरः । चतुर्णां पुरुषार्थानां दातादेवश्चतुर्भुजः । इति । कुवलयानन्दः ॥'

नाम राम इति तुल्यमात्मजे
वर्तमानमहिते च दारुणे ।
हृद्यमस्य भयदायि चाऽभव-
द्रत्नजातमिव हारसर्पयोः ॥

रघुवंश. ११।६८ ।

अत्रापि रामपदं प्रकरणप्राप्तयो राघवजामदग्न्ययो रुभयोर्वाचिकम् तेनात्र श्लेषः । यत्र त्वन्यत्र कृतसंकेतैश्चन्द्रनेत्ररामादिभिः स्वस्वार्थेषु रूढैः पदैरेकद्वित्रिप्रभृतयः संख्याः सूच्यन्ते तत्र लक्षणैव न श्लेषः । तादृशस्थलेषु रामादिभिः पदैः प्रथमं स्वमुख्यार्थानां राघवादीनाम् अभिधयोपस्थितिः । ततस्तद्बाधे राघवादिव्यक्तित्रयगोचरत्रित्वस्य प्रतीतिः । इह रामपदेन त्रित्वावगमे तत्पदाभिधेयव्यक्तीनां प्रसिद्धं त्रित्वमेव हेतुः । रामादिभिः पदैस्त्रित्वादिबोधने तादृशं किञ्चित्प्रयोजनं नास्ति यदर्थं गङ्गायां घोषः इत्यादिषु स्थलेषु प्रयोजनवती लक्षणाश्रीयते ।

अथ चतुर्थः पदभेदो यौगिकरूढाख्यः--

समुदायस्य शक्त्यैकोऽवयवानां तथा परः ।
यत्रार्थो बोध्यते तत्तु पदं यौगिकरूढकम् ।।९९।।
प्रकृतिप्रत्ययादीनां शक्त्योद्भेदकृदर्थकम् ।
पदमुद्भिद् यथा रूढ्या यागभेदस्य वाचकम् ।।१००

उत्पूर्वकाद् भिदेः क्विपि निष्पन्नम् उद्भित्पदम् अवयवानां शक्त्या ऊर्ध्वभेदन कर्तृणामङ्कुरादीनां बोधकम् । ते हि भुवमुद्भिद्योत्पद्यन्ते । तदुक्तम् उद्भिदस्तरुगुल्माद्याः । इत्यमरः । तदेव रूढ्या यागविशेषस्य वाचकम् । 'उद्भिदा यजेत' इत्यादिना विषयोऽयं मीमांसायाः प्रथमाध्यायस्य चतुर्थ पादे निरूपितः । एवम् निशान्तपञ्चाननाश्वगन्धादिपदैरपि केवलावयवानां शक्त्या क्रमशो रात्र्यवसानपञ्चसंख्यकमुखवद् व्यक्तिवाजिगन्धयुक्तमन्दुरादयः केवलसमुदायशक्त्या च भवनसिंह-भेषज-विशेषादयो रूढार्था बोध्यन्ते । तदुक्तं रसगङ्गाधरे "अन्ये तु अश्वकर्णादिशब्देषु न अभिधायाः प्रथमद्वितीययो विधयोः (यौगिकस्य रूढेश्च) प्रसक्तिः कैवल्यविरहात् परन्तु सङ्करस्य द्वौभेदौ योगरूढि यौंगिकरूढिश्चेति । तत्राद्यस्योदाहरणं पंकजादिशब्दाः द्वितीयस्याश्वकर्णादयः इत्याहुः चतुर्थ एवाऽयमभिधाया भेदः (यौगिकरूढिः) इत्यन्ये ।' यथा—

द्राग्वारुणीभजननिह्नुतराजतेजो,
निष्क्रान्ततारमुपशान्ततमोविकारम् ।
पूर्वाशयाविशति सत्पथभाजि मित्रे,
सत्यं निशान्तसमयस्य निशान्तमासीत् ।।

चम्पूरामायणे सुन्दरकाण्डे

अत्र प्रथमं निशान्तपदमवयवानां शक्त्या निशावसानबोधकं द्वितीयं तु रूढ्या भवनवाचकम् । एवम्—

आ नोभद्राः क्रतवो यन्तु विश्वतो-
ऽदब्धासो अपरीतास उद्भिदः ।
दवा नो यथा सदमिद् वृधे अस-
न्नप्रायुवो रक्षितारो दिवे दिवे ।।

ऋ. १ । ८९ । १

देवता=विश्वेदेवाः । ऋषिः=गोतमो राहूगणः । छन्दः जगती ।

भद्राः = कल्याणकारिणः । क्रतवः = दृढ़संकल्पाः । अदब्धासः=असुरैरहिंसिताः । अपरीतासः=अ+परि+इण्गतौ+क्तप्रत्यये रूपम् । शत्रुभिरप्रतिरुद्धागमनाः । उद्भिदः=सत्कर्मसु विघ्नोत्पादकानाम् उद्भेदनकर्तारः । अथवा यथा बीजाङ्कुरा जातमात्रा अपि भुवःपृष्ठमुद्भिद्य उत्तिष्ठन्ति तथा विघ्नान् विनिवार्य सर्वदाऽभ्युत्थानशीलाः । अप्रायुवः=अप्रमाद्यन्तः सततजागरूका इत्यर्थः । रक्षितारश्च देवाः दिव्यगुणयुक्ताः सत्पुरुषाः । सदमित्=सदैव । दिवे दिवे=प्रतिदिनम् । अस्माकं यज्ञमायन्तु=आगच्छन्तु । नः वृधे च असन् अस्माकं वृद्धयेऽभ्युदयाय च भवन्तु । क्रतुः संकल्पः । इह क्रतुपदं लक्षणया क्रतुमतः पुरुषान् लक्षयति । नितरां दृढ़संकल्पवत्त्वबोधनं प्रयोजनम् । वृधे=वर्धतेर्भावे क्विपि स्त्रियां चतुर्थी । विभक्तौ रूपम् । अदब्धासः, अपरीतासः='आज्जसेरसुक्, इत्यनेन जसोऽसुक् (पाणि० ७.१.५०) । उद्भित्पदमिह यौगिकरूढम् ।

निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ।। ऋ० १।२५।१०

देवता=वरुणः । ऋषिः=आजीगर्तिः शुनःशेपः । छन्दः=गायत्री ।

धृतव्रतः=धृतं प्रजापालनव्रतं येन तथाविधः । सुक्रतुः=शोभनसंकल्पः शोभनकर्मा वा । क्रतुपदमिह संकल्पार्थकं कर्मार्थकं वा । यत्क्रतुर्भवति तत् कर्म कुरुते इति बृहदारण्यकोपनिषदि (४.४.५) । यज्ञोऽपिक्रतुरुच्यते । यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः । इत्यमरः । वरुण=प्रजाभिः कृतवरण इत्यर्थं

साम्राज्याय=साम्राज्यस्य रक्षार्थम् । पस्त्यासु आनिषसाद=प्रजासु सिंहासनमधि चक्रे अधि-करोतिवा । वरुणपदमिह यौगिकम् । वृणोतेः । कृवृदारिभ्य उनन् (उणा. ३.५३) व्रियते प्रजा-भिर्वृणोति वा स्वगुणैर्जनानां हृदयानि । सम्राजो भावः साम्राज्यम् । सम्राट्तु-येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट् इत्यमरः । साम्राज्यादिपदान्तर-सान्निध्यादिह वरुणपदं नृपार्थकम् । वरुणपदमिह यौगिकं न तु 'अपां मध्ये०' इति मन्त्रे देवतार्थक-पदवत् रूढम् । एवं वरुणपदं क्वचिद् यौगिकं क्वचिच्च रूढमिति यौगिकरूढम् । यथा वा--

बलविज्ञायः स्थविरः प्रवीरः,
सहस्वान् वाजी सहमान उग्रः ।
अभि वीरो अभि सत्वा सहोजा,
जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥
ऋ० १०।१०३।५

इह वाजीति पदम् इन्द्रस्य विशेषणम् । वाज पदं वेगबलान्नपक्षस्वनाद्यर्थकम् । "· · · · वाजो निः स्वनपक्षयोः । वेगे पुमानथ क्लीबे घृतयज्ञान्न-वारिषु" इति मेदिनी । वाजो वेगो बलं वाऽस्या-स्तीति व्युत्पत्या पदमिदं यौगिकम्--

उद्धर्षय मघवन्नायुधानि,
उत्सत्वनां मामकानां मनांसि ।
उद् वृत्रहन् वाजिनां वाजिनानि,
उद्रथानां जयतां यन्तु घोषाः ॥
ऋ० १०।१०३।१० ।

देवता--इन्द्रः ऋषिः-ऐन्द्रोऽप्रतिरथः । छन्दः त्रिष्टुप् । इह बाजिपदमश्वार्थे रूढम् । तेन यौ-गिकरूढम् ।

एवम् "जारः कनीनां पतिर्जनीनाम् ॥ ऋ०-१।६६।४ अत्र जार पदं जारणकर्त्रर्थे यौगिकम् । "जार आ भगम्० ऋ. १०।११।६ ।" जारपदमत्र पारदारिकार्थे रूढम् । सोऽग्निरेव कन्यानां कन्या-भावस्य=कौमार्यस्य जरयिता वर्तते । विवाहाग्नौ लाजादिद्रव्येण होमे तासां कौमार्यं निवर्तते । स एव जनीनां कृतविवाहानां जायानां पतिः=भर्ता च । इति श्री सायणः । पतिः पालनात् । पातेर्डतिः । उणा (४६७) 'जार आभगम्' ऋ. १०।११।६ । जार इवभगम् । आदित्योऽत्र जार उच्यते, रात्रेर्जर-यिता । तथापि निगमो भवति 'स्वसुर्जारः शृणोतु नः" ऋ. ६।५५।५ । इति । उषसमस्य स्वसारमाह । अपित्वयं मनुष्यजार एवाभिप्रेतः । स्यात् ।" इति निरुक्ते श्रीयास्कः ३ अ०।३ पा०।१६ ख. । एवम्--

शं नो अज एकपाद् देवो अस्तु,
शं नोऽहिर्बुध्न्यः शं समुद्रः ।
शं नो अपां नपात् पेरुरस्तु,
शं नःपृश्निर्भवतु देवगोपाः ॥
ऋ० ७।३५।१३

इह रूढे बलाद् अजपदस्य छागाख्यः पशु-विशेष इति, एकपाद् इति पदस्य एकचरणवान् कश्चित्=खञ्ज इतिरूपोऽर्थश्च पाठकचेतसि प्रथमं पदं कुरुते, किन्तु प्रकरणेऽनुपपद्यमानत्वात् सविध एव देव इति विशेषणपदसत्त्वाच्च अजपदस्य अजनः=सततगतिमान् तमसामधिक्षेप्ता, अजन्मा अज्ञातजन्मा वेति, एकपात्पदस्य च एकः पाति पालयति विश्वम् , एकः पिवति भौमं जलं स्वर-श्मिभिरिति, एकः पादोऽस्येतिरूपो वा यौगिकोऽर्थः स्वात्मानमुपस्थापयति । सायणभाष्ये तु अत्रत्यानां सर्वेषां कर्तृपदानाम् देवताविशेषः" इत्यभिधाय व्याख्या विहिता । एवमेतानि पदानीह यौगिक-रूढानि । सूर्यस्य एकपात्त्वम्-एकं पादं नोत्खिदति सलिलादुधंस उच्चरन्नित्यादि (अथ०११।४।२१) मन्त्रेऽपि वर्णितम् । अपि च--

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् । दोग्ध्री धेनु र्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायताम् । निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम्, योगक्षेमो नः कल्पताम् । (यजु० २२।१२ ।

हे ब्रह्मन्, अस्माकं राष्ट्रे ब्राह्मणः=ब्रह्म वेदम् अधीते वेद वा, तथाविधो जनः । ब्रह्मवर्चसी आजायताम=ब्राह्मतेजःसंपन्नो भूयात् । तदुक्तम्-धिग्बलं क्षत्रियबलं ब्रह्मतेजः परं बलम् । राजन्यः क्षत्रियः । शूरः=पराक्रमी । इषव्यः=शरप्रयोगे साधुः । अतिव्याधी=रिपूणामतिशयेन वेद्धा; महारथश्च आजायताम् । नः धेनुर्दोग्ध्री = प्रचुरपयो दानशीला । सप्तिः आशुः=अश्वः शीघ्रगामी । योषा पुरन्धिः=नारी च पुरं=परिवारं रूपादिगुणसंपन्नं वपुर्वा दधातीति तादृशी आजायताम् । नो राष्ट्रे रथेष्ठाः=रथारूढः सैनिकः । जिष्णुः=जयनशीलः स्यात् । किञ्चास्य नो यजमानस्य युवा वीरः सभेयो जायताम्=तरुणस्तनयः सभासु प्रभाववान् तत्र साधुर्वा भूयात् । स बाल्य एव न म्रियेत वार्धकेऽपि युवेव समर्थश्च स्यात् । निकामे निकामे नः पर्जन्यो वर्षतु=मेघो नः कामवर्षी भवेत् । न ओषधयः फलवत्यः पच्यन्ताम्=सस्यसंपदः प्रचुर फलशालिन्यः सन्तु । ओषध्यः फलपाकान्ताः इत्यमरः । मनुश्च १।४६ । नः योगक्षेमश्च कल्पताम् अप्राप्तस्य अभीष्टस्य प्राप्तिर्योगः, प्राप्तस्य परिरक्षणं च क्षेमः । तयो र्द्वन्द्वसमासः । इहैकवचनं पुंस्त्वं च छान्दसम् । वर्धते वर्धयति प्रजा वेति-ब्रह्म । बृंहेर्नोऽच्च (उण. ५८५) बृहिवृद्धौ इति-धातोर्मनिन्, नुमा निष्पन्नस्य नकारस्याकारश्च । 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रःप्रजापतिः ।' इति-मेदिनी । ब्रह्म अधीते वेद वेति ब्राह्मणः । तदधीते तद्वेद (पाणि ४-२-५९) इति सूत्रेण अण् प्रत्यये-रूपम् । वेदाध्येतरि वेदविदि वा विवक्षिते यौगिकमपि पदमिदं कालान्तरे ब्राह्मणकुलोत्पन्नपुरुषार्थे निरूढम् । राजन्यः=राज्ञोऽपत्यमित्यर्थे 'राजश्वशुराद्यत्' ( पाणि. ४.१.१३७ ) इति सूत्रस्थ 'राज्ञोजातावेवेति वाच्यम्' इति वार्तिकेन केवलक्षत्रियकुलोत्पन्नस्य राज्ञोऽपत्यार्थे नियन्त्रितोऽयं शब्दस्तेनास्य योगरूढता । तदुक्तम् सि. कौ. टीकायां श्री ज्ञानेन्द्र सरस्वतीमहोदयेन 'एवं च पङ्कजादिवद्योगरूढ इति फलितोऽर्थ इति । राजन्यपदस्याग्निवाचकत्वे तु 'राजेरन्यः ( उणा ३८० )इति सूत्रेण राजृदीप्तौ धातोः अन्य प्रत्ययेन सिद्धिः । महांश्चासौ रथः, महान् रथो वा यस्येति व्युत्पत्तिभ्यां लभ्ययोरर्थयोः कारणाद् यौगिकोऽपि महारथशब्दः 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स विज्ञेयो महारथः ।' इति वचनानुसारं तथाविधवीरार्थे निरूढत्वाद् यौगिकरूढः । शूर वीर विक्रान्तौ धातुभ्याम् अच् प्रत्यये शूरो वीरश्च । अथवा अजगतिक्षेपणयोः धातोः अजति=अभ्यमित्र गच्छति क्षिपतिवाऽस्त्राणीत्यर्थे 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ( उणा-१७० ) रक् प्रत्यये अजेश्च 'अजे र्व्यघञपोः ( पाणि. २-४-५६ ) इति सूत्रेण वीभावे वीरः । विशेषेण ईरयति कम्पयति शत्रूनिति वा वीरः । एवं वीरपदं यौगिकमपि क्वचित् पुत्रार्थे रूढम् यथा 'अधा स वीरैः दशभिर्वियूयाः ऋ. ७-१०४-१५ अथवा अवीरामिव मामयं शरारु रभि मन्यते. ।। ऋ. १०-८६-९ । लोकेऽपि वीर पदं क्वचित्पुत्रार्थेऽन्यत्र भ्रात्रर्थे जिनविशेषार्थे च रूढम् । सभेयः=सभासु भागग्रहणार्ह इत्यर्थे ढश्छन्दसि ( पाणि. ४-४-१०६ )इति सूत्रेण ढप्रत्यये कृते सिध्यति । तेन यौगिकः । एवम् इषव्य-अति

व्याधी-दोग्ध्री-वोढृ-आशु-जिष्णु प्रभृतिषु पदेषु अवयवशक्त्या स्वकीयार्थसमपर्कत्वमति स्पष्टमेव।

ननु भवतु लोके यौगिकत्वादिनिमित्तं पदानां चतुर्विधत्वम्, येषां तु मीमांसकानाम् अपौरुषेया अत एव च नित्या वेदाः, येषां वा पुनरपरेषाम् वैदिकानाम्–'तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे (ऋ. १०।९०।९। यजु. ३१।७। अथर्व. १९।६।१३। इत्याद्यनुसारं वेदा मानवोत्पत्तेः पूर्व मेव तस्मात् परमपुरुषादाविर्भूताः इत्यभिमतं तेषां मते वेदेषु व्यवहारमूलिकाया रूढेः कथं संभवः, व्यवहारस्य वेदेभ्योऽर्वाचीनत्वादिति निरूपयति––

मीमांसामांसलप्रज्ञा जैमिन्याद्या विपश्चितः।
अपौरुषेयतां तावद् वेदानां प्रत्यपादयन् ॥१०१॥

वैदिका ये च सर्गादौ लोकानुग्रहकाम्यया।
मन्यन्ते तान् समुत्पन्नांस्तस्मात् परमपूरुषात् ॥१०२

उभयोरपि शब्दानां चतुष्ट्वं पूर्ववर्णितम्।
कथं नामोपपद्येत, तत्र रूढेरसंभवात् ॥१०३॥

इति चेद् युक्तमुक्तं हि विमृश्य भवता न्विदम्।
मनीषिणामति प्राचां चेदमेव मनीषितम् ॥१०४॥

यतः सर्वेषु वेदेषु शब्दाः सर्वेऽपि यौगिकाः।
रूढेः प्रयोगतन्त्रत्वाद् बहूनां बहुशश्चिरम् ॥१०५॥

पित्रादिकृतसंकेताद् व्यवहाराच्च तादृशात्।
प्रवर्तते पदार्थेषु रूढिर्योगापहारिणी ॥१०६॥

नित्ये सर्गादिजे वाऽपि वेदे रूढिः कथं भवेत्।
मानवव्यवहारस्य तदनन्तरसंभवात् ? ॥१०७॥

अनित्यस्येतिहासस्य भूगोलस्याऽपि वर्णनम्।
न चास्ति तत्र नामापि विशिष्टव्यक्तिवाचकम् ॥१०८

ये तु विष्णुवसिष्ठाऽत्रिदधीचिच्यवनादयः।
तथा सरस्वतीगंगा विपाशायमुनादयः ॥१०९॥

देवर्षिनदीवाचिशब्दा मन्त्रेष्वनेकशः।
दृश्यन्ते यौगिकास्तेऽपि तदगुणातिशयार्थकाः ॥११०

शब्दान् वेदेभ्य आदाय तद्गुणख्यापनेच्छया।
पश्चात् संज्ञाः कृता येषां, न तेषां वर्णनं श्रुतौ ॥१११

तदुक्तं भगवता मनुना–

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥
मनु. १.२१

यत्तु––

इदं विष्णुर्वि चक्रमे त्रेधा निदधे पदम्।
समूढमस्य पांसुरे ॥ ऋ. १।१२।१७

द्यौर्मे पिता जनिता नाभिरत्र,
बन्धुर्मे माता पृथिवी महीयम्।
उत्तानयो श्चम्वोर्योनिरन्त-
रत्रा पिता दुहितुर्गर्भमाधात् ॥
ऋ. १।१६४।१३।

इन्द्रो दधीचो अस्थभि र्वृत्राण्यप्रतिष्कुतः।
जघान नवतीर्नव ॥ ऋ. १।८४।१३।

उप प्रेत कुशिकाश्चेतयध्व-
मश्वं राये प्रमुञ्चता सुदासः।
राजा वृत्रं जङ्घनत् प्रागपाग् उदग्,
अथा यजाते वर आ पृथिव्याः ॥
ऋ. ३।५३।११

मन्त्रेष्वेषु पौराणिकाख्यानानां प्राचीननृपतीनां यज्ञादेर्दानानाम् इतिहासस्य च संकेतो न केनाऽप्यपलपितुं शक्य इत्युच्यते, तत्राह––

यद् विष्णुर्वामनो भूत्वा चक्राम भुवनत्रयम्।
बलि मूर्ध्नि पदं धृत्वा पाताले प्राक्षिपच्च तत् ॥११२

यद् दधीचोऽस्थभि र्वृत्रासुरमिन्द्रो जघान च।
निजां दुहितरं यच्च प्रजापतिरधर्षयत् ॥११३॥

यत् सुदासः क्षितीशस्योत्स्रष्टुं यज्ञाय तद् ययुम् ।
वर्णितं कुशिकाख्यानामृत्विजां च प्रबोधनम् ।।११४।।

एतदाद्यखिलं वेदरहस्याऽज्ञानजृम्भितम् ।
सत्यार्थविद्भिराचार्यैरिदं प्रागेव दर्शितम् ।।११५।।

तथाहि--

बालसूर्यो भुवः पृष्ठादन्तरिक्षं ततो दिवं ।
क्रामन् पादैर्बलिध्वान्तं प्रापयत्यधरं जगत् ।।११६।।

सूर्यः पिताऽन्तरिक्षंच योनि, भूर्दुहिता तथा ।
दूरे विनिहिता यस्माद्, वृष्टिस्तद् गर्भधारणम् ।।११७

द्युलोकेन सम्बन्धात् सूर्यो द्यौरित्येतन्मन्त्रव्याख्यायां श्री सायणः । अत्र तात्स्थ्यलक्षणा मञ्चाः क्रोशन्तीतिवत् । श्री सायणोऽपि मन्त्रस्यास्य व्याख्यायां यौगिकार्थसरणिमेवानुससार । तथा--

इन्द्रो विद्युद् घनो दध्यङ् तदस्थीन्यस्थिरा अपः ।
दुर्भिक्षादेः क्षयो वृष्ट्या वृत्रासुरवधो मतः ।।११८।।

इन्द्रपदं निरुक्ते मध्यस्थानदेवतासु पठितम् । इरां = जलं दृणातीति तद् व्युत्पत्तिश्च प्रदर्शिता । 'इरा तु मदिरावारिभारत्यशनिभूमिषु ।' इति-विश्वः । जलं हि विद्युद्धाराप्रवेशेन स्वघटकयो र्द्वयोस्तत्त्वयोः ओषजनोदजनयो र्विभक्तं भवति । जलं दधद् अञ्चतीति दध्यङ् = मेधः । पदमिदं दधत्पूर्वकस्य अंचतेः क्विन् प्रत्यये, दधतो दधिभावे च पृषोदरादित्वात् साधु । प्रत्यक्तमस्मिन् ध्यानम् इति यास्कः। मेघे हि वृष्टिकामानां जनानां ध्यानं प्रत्यक्तं भवति । अनवस्थानाद् अस्थिरा आप एव तस्यास्थीनि । तस्य जलस्य कदाचित्करकाकार ग्रहणाद् अस्थित्वं सुव्यक्तं भवति धवलत्वकठिनत्वसामान्यात् । मेघजलानामस्थिरत्वं मन्त्रान्तरेऽप्युक्तम्--

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।। ऋ. १।३२।१० ।

अस्थावराणां काष्ठाः कास्थाः तासामिति, निरुक्ते २।५।१६ वृत्रो वृणोते र्वा वर्तते र्वा वर्धतेर्वा । आवृण्वन्ति लोकमनावृष्टिजन्यानि विविधानि कष्टानि । किं च मन्त्रेऽस्मिन्नस्थिपदस्य स्थानेऽस्थपदं दृश्यते । वृत्रपदमत्र नपुंसकलिंगकम् । तस्य संख्या च नवतीर्नवोक्ता । तेनास्य व्यक्तिविशेषवाचकत्वं न संभवति । अपि च--

सुदासो नृपतेरश्वमेधस्य नाऽत्र वर्णनम् ।
कोऽपि परन्तपो यज्वा सुदाः शोभनदानवान् ।।११९

ये गोतमभरद्वाजविश्वामित्रपुरोगमाः ।
प्रसिद्धा ऋषयः सन्ति सप्तलोकपुराणयोः ।।१२०।।

देहे सप्तेन्द्रियत्वेन यजुर्वेदे तु वर्णिताः ।
तथा शतपथे तेषां यौगिकत्वं निरूपितम् ।।१२१।।

तथाहि–

सप्त ऋषयः प्रति हिताः शरीरे,
सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयु
स्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ।।
यजु. ३४।५५

अयमेव विषयो बृहदारण्यकोपनिषदि प्रकारान्तरेणोक्तः--

अर्वाग् बिलश्चमस ऊर्ध्वबुध्न्य-
स्तस्मिन्यशो निहितं विश्वरूपम् ।
तस्य ऽऽसत ऋषयः सप्त तीरे
वागष्टमी ब्रह्मणा संविदाना ।।

(क्रमशः)

# वसन्तं लब्ध्वाऽमुं............,

शुकदेवदासः शास्त्री नव्यव्याकरणाचार्य, एम०ए० प्रथम वर्ष (दर्शन)

व्यतीतं तच्छीतं शशशशशशेतिस्वनकरम्,
प्रभातोत्थाने नोऽनुभवति तनुस्तीक्ष्णमनिलम् ।
तुषारापातोऽसौ पथगमनरोधः प्रतिमुखः,
वसन्तं लब्ध्वाऽमुं भवति मुदितं विश्वमखिलम् ।।१।।

रविर्धत्ते शीघ्रं प्रखरतरदीप्तिं समुदयन्,
हिमस्यांशं नाशं नयति च गृह्णन्नुत्तरदिशम् ।
निरभ्राकाशे च भ्रमति दधदेकाधिपतिताम्,
वसन्तं लब्ध्वाऽमुं भवति मुदितं विश्वमखिलम् ।।२।।

समाधत्ते वातस्त्रिविधगुणतां लोकरुचिराम्,
श्रमं हृत्वा शैत्यादभि भरति गन्धेन मुदिताम् ।
अपि स्वीयान्मान्द्यान्नुदति हृदि काञ्चिन्मधुरिमाम्,
वसन्तं लब्ध्वाऽमुं भवति मुदितं विश्वमखिलम् ।।३।।

तरुर्जीर्णं पत्रं त्यजति गतकालं मतमिव,
नवान्युद्भाव्यन्ते किसलयमतानि प्रतिभया ।
प्रसर्यन्ते तावत् कुसुमयशसां गन्धनिवहाः,
वसन्तं लब्ध्वाऽमुं भवति मुदितं विश्वमखिलम् ।।४।।

प्रकृष्यन्ते लोका उपवनवने कोकिलरवैः,
कृषिक्षेत्रे रम्ये परिलसति शस्यञ्च विविधम्।
निसर्गः कल्याणं विरचयति नेत्रोत्सवमहो!
वसन्तं लब्ध्वाऽमुं भवति मुदितं विश्वमखिलम् ।।५।।

धरण्याः प्रत्यंगं स्फुरति नवशोभाविलसितम्,
तरङ्गिण्यां नूत्नः प्रवहति रसो नाडिषु यथा ।
शशीसूर्यौ नेत्रे खलु च पिबतो निर्भरमिदम्,
वसन्तं लब्ध्वाऽमुं भवति मुदितं विश्वमखिलम् ।।६।।

फलं लब्धुं स्वीयं यतति नितरां छात्रकृषकम्,
प्रतीक्ष्ये सम्प्राप्ते भवति किमिवाऽकल्पितसुखम् ।
नवं वर्षं चायव्ययमपि नवं भोजननवम्,
वसन्तं लब्ध्वाऽमुं भवति मुदितं विश्वमखिलम् ।।७।।

# वसन्तोऽयम्, वसन्तोऽयम् !

विद्याभूषण: श्रीगणेशराम शर्मा, डूंगरपुरम् (राज०)

अये, भो:! दृश्यताम्! वसुधातले व्याप्तो वसन्तोऽयम्!
नवीनां मोहिनीं मधुमाधुरीं तेने वसन्तोऽयम् !!१।।

प्रसन्ना भान्ति दिग्देशा, नभो नीलं च सुस्फीतम्;
चकासच्चारुवासन्ती प्रभापूर्णो दिगन्तोऽयम् !२।।

वनीनां प्रान्तरेष्वथ शाद्वलेषूद्यानवाटीषु;
द्रुमाणां पत्रपुष्पैर्मञ्जरीमाधुर्यनन्तोऽयम् !३।।

विधत्ते सर्वलक्षणसुन्दरीं नवयौवनां सृष्टिम्;
किरत्यानन्दलीलाह्लादमुत्फुल्लो वसन्तोऽयम् !४।।

पलाशा: पूरिताशाश्चित्रभास्वद्रयशोभाढ्या:;
स्फुटं विज्ञापयन्त्याविर्बभौ सर्वर्तुकान्तोऽयम् !५।।

समन्तात् पुष्पपल्लववैभवै: शृङ्गारिता भूमि:;
तनोति स्वागताचारांश्च ब्रूते प्राणकान्तोऽयम् !६।।

प्रफुल्लैश्चित्रवर्णोद्भासुरैस्तै: किंशुकैरेतै:;
स्फुटं जोधुष्यते–'लोके वसन्तोऽयम्, वसन्तोऽयम् !७।।

कलं कूजन्त्यमी पुंस्कोकिला कर्णेषु पीयूषम्;
विहङ्गानां रुतैर्ज्ञातं 'हिमर्तोर्मञ्जुलान्तोऽयम् !'८।।

सुखस्पर्शा: सुगन्धा वान्त्यमी मन्दानिला भूमौ;
समाप्याययन्ति जीवनचेतनां सद्य: स्पृशन्तोयम् !९।।

वनश्रीर्दिग्वधूदेवाङ्गनानां मण्डलै: साकम्;
नरीनर्तीव, पश्यन् मोदते हर्षन् वसन्तोऽयम् !१०।।

अमन्दामोदमुग्धा मञ्जुला माला मिलिन्दानाम्;
रसोन्मत्ता रणन्त्येता 'वसन्तोऽयम्, वसन्तोऽयम् !११।।

मनोभूर्विश्वदिग्विजये प्रयुङ्क्ते मान्मथास्त्रं भो: !
तत: शान्तादिश: सर्वा निशीथश्चन्द्रकान्तोऽयम् !१२।।

सुधांशो: कौमुदी पीयूषवर्षै: स्नापयत्येनम् !
उपादत्ते च शस्यश्यामला भूर्निर्मलं तोयम् !१३।।

अजस्रं ताइमा वर्षन्ति वासन्तीलता मुग्धा:,
निकुञ्जे पुष्पसम्पत्सौरभोद्गारान् हसन्त्योऽयम् !१४।।

मधूकै: सर्षपैराख्यायतेऽशोकै: पलाशैर्वा;
वसन्तोऽवातरद्भूमौ मिथो नव्यो ह्युदन्तोऽयम् !१५।।

स्तुवन्तो यं मनोमोदं लभन्ते काव्यगुम्फेषु;
कवीन्द्रा भारतश्रीमञ्जुलो व्याप्तो वसन्तोऽयम् ।।१६।।

न तावद्भावनोद्रेका न रम्यार्था न चातुर्यम्;
प्रशंसेयुर्न यावत् काव्यबन्धं साधु सन्तोऽयम् !१७।।

—०—

# अकारादिध्वनीनां रेखाकृतिस्वरूपम् (लिपिः)

## ( भाषाविज्ञान–भौतिकविज्ञान–तन्त्रशास्त्रसमन्वितम् )

श्री डा० रामानारायणदासः नव्यव्याकरणाचार्य विद्यावारिधिः (पी-एच. डी.) वाराणसी

वैदिकयुगे लिपेरास्तित्वस्वीकारेऽपरञ्च प्रमाणं श्री दाशरथिरामस्य वैदिकयुगीयत्वरूपं विद्यते ।(न वयं मन्यामहे प्रमाणाभावात् प्रमाणाभासानां च स्वीकारे नैके दोषां आपतन्ति-सम्पादकः) केषाञ्चिद् विदुषां मतानुसारेण दशरथसुनुः श्रीरामो वैदिकयुगे प्रादुर्बभूव१ ऋग्वेदस्य दशममण्डले श्रीदाशरथिरामस्य चर्चा दृश्यते । अत्र प्रमाणमधस्ताद् अङ्कितम्––

प्र तद् दुःशीमे पृथवाने वेने प्ररामे वोचमसुरे मघवत्सु ।
ये युक्त्वाय पञ्चशतास्मयु यथा विश्राण्येषाम् ।।

प्रमाणरूपेण अत्रोद्धि्रयमाणमन्त्रस्य भाष्यं सायणाचार्यो निम्नोक्तप्रकारेण कृतवान्––

'ये देवाः पञ्चशतानि रथानि युक्त्वाय अश्वैर्युक्त्वाअस्मद्युः अस्मत्कामाः सन्तः यथा यज्ञमार्गिणो गच्छन्ति, तेषामेषां देवानां विश्राणि । देवानां लोके वा विशेषेण श्रावकगुणयुक्तं तत्स्तोत्रं दुःशीमे दुःशीमनाम्नि पृथवाने पृथवानः पृथिः तस्मिन्वेने च असुरे बलवति रामे च एतेषु राजसु प्रवोचं प्रब्रवीमि प्रख्यापयामीत्यर्थः ।'

अत्र भाष्ये दुःशीमेत्यादिव्यक्तिचतुष्टयस्य कृते राजशब्दो विशेषणतया प्रायुज्यत । त्रयो रामाः प्रसिद्धाः सन्ति ते यथा परशुरामः, दाशरथी रामः, बलरामः । एतेषां मध्ये श्री दाशरथीराम एव राजा बभूव नान्यः । तेन अत्र मन्ये तस्यैव ग्रहणं वेदितव्यम् । श्री दाशरथिरामस्य वैदिकत्वेऽकारादिध्वनीनां रेखलिप्यात्मकस्वरूपमपि वैदिककालिकं निश्चप्रचं जातम् । यतो हि अयं भगवान् श्री रामः स्वनामाङ्कितमुद्रां दधाति स्म । तथा चोक्तं वाल्मीकीयरामायणे––

रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम्१'

किं बहु व्याहारेण । ऋगादिवेदेषु एवं भूतां अपि पदार्था दृष्टिपथं समायान्ति, येषां वैदिक कालानन्तरं प्रादुर्भावः, परन्तु तेऽपि वैदिककालिकसत्तावन्तो दृश्यन्ते । तद्यथा––

---

१. ऐसी भी परम्परागत श्रुतियां हैं कि वेदों की रचना के बाद 'रामायण' की रचना हुई और उसकी कलेवर वृद्धि के लिये लगभग ५०० ई० पूर्व तक उसमें अनेक क्षेपक जुड़ते गये । विद्वानों की परम्परा राम और वाल्मीकि को समकालीन मानने के पक्ष में है । **श्री चिन्तामणि विनायक वैद्य का मत है कि ऋग्वेद के दशवें मण्डल, में जिसमें राम का उल्लेख हुआ है, उसका नायक कोई दूसरा नहीं था-दाशरथी राम ही थे ।** श्री वाचस्पति गैरोला 'संस्कृत साहित्य का संक्षिप्त इतिहास पृ. सं. १५६ । अत्र रेखांकित वाक्येन मूलोक्तस्य पुष्टि र्जायते कस्यचिन्मते तु वेदेषु अनत्यैतिह्यदर्शनं भ्रान्तिधारणा सायणाचार्येणापि भाष्यभूमिकायामन्यत् लिखितं, भाष्येचान्यत्, अतोऽस्मिन् विषये तस्यापि मतिविभ्रम आसीत् ।

१. वाल्मीकीयरामायणम्, सुन्दरकाण्डे सर्गः ३६, श्लोक सं० २

'इमं मे गङ्गे यमुने शुतुद्रि[1]'

एवं पवित्रतमानां गङ्गादिनदीनां वैदिकयुगत्वे 'प्रतद्दुःशीमे' इति मन्त्रे श्री रामस्योल्लेखात् तस्य वैदिकयुगीयत्वस्वीकारे न काऽपि क्षतिः। स्वनामाङ्कित[2]मुद्राधारणस्योल्लेखाच्च लिपेरस्तित्वं वैदिककालत एवं स्वीकर्तुमापतति। अत्र विषयेऽपरञ्च प्रमाणमथर्ववेदीय एको मन्त्रो दृष्टिपथं समायाति। स च मन्त्रो यथा—

यद्वो मुद्रं पितरः सोम्यञ्च ते नो सचध्वम्,
स्वयशसो हि भूतम्[3]

'हे पितरः यत् सोम्यं सोमयागं कर्तुं योग्यं (पवित्रमित्यर्थः) मुद्रं धनं विद्यते, तादृग् धनमस्मभ्यं प्रयच्छत, न तु अन्यायसमर्जितमशुद्धं मुद्रं=मुद्रां=धनं वा' इति पूर्वार्द्धमन्त्रस्य तात्पर्यं विद्यते। अस्मिन्मन्त्रे मुद्रं पदं वैदिकयुगे लिपेरस्तित्वं प्रमाणी करोति। मुदं हर्षं रातीति विग्रहे मुदकर्मकराधातोः '[4]आतोऽनुपसर्गेकः' इति कप्रत्ययेऽनुबन्धलोपे 'आतो लोप इटि च' इति राधातुघटकस्य आकारस्य लोपे सति 'मुद्र' इति स्थिते 'छन्दसि सर्वे विधयोविकल्प्यन्ते' इति नियमानुसारेण टावनुपपत्तौ च मुद्रमितिरूपम्, टाप् प्रत्यये च 'मुद्रा' इतिरूपं संसिद्ध्यते। इदञ्च मुद्रपदं (मुद्रा पदम्) वैदिक युगे कथं प्रमाणमिति ज्ञानात्पूर्वं मुद्रापदस्य रूप्यकार्थे (धनार्थे) अद्यापि वैदिकयुगवत् प्रयोगः क्रियते।' तत्कथमिति ज्ञानमावश्यकम् विद्यते। मुद्रांशब्दस्य अपभ्रष्टः 'मुहर' इति शब्दोऽधुना बहुशः प्रयुज्यते। अपभ्रष्टमुहरशब्दवाच्यार्थरूपे काष्ठादिफलके रेजर्वबैङ्काध्यक्षस्य पदसङ्केतसहितानि नामाक्षराणि अङ्कितानि भवन्ति। कर्गलपत्रनिर्मितं चतुष्कोणात्मकं यद्वा वृत्ताकारात्मकं धातुनिर्मितं यद् रूप्यकं दृश्यते, तद् रेजर्वबैङ्काध्यक्षनामाङ्कितमुद्रया अपि च राष्ट्रचिन्हेन (अशोकस्तम्भेन) चिन्हितं भवति।' अतो रेजर्वबैङ्काध्यक्षनामाङ्कितमुद्रया रूप्यकमपि ( धनं द्रव्यंवा ) मुद्रापदेन व्यवह्रियते।

मुद्राया इयं प्रथा न आधुनिकी। अपि तु अस्याः प्रथायाः परम्परा अविच्छिन्नरूपेण वैदिकयुगादेव प्रचाल्यमाना विद्यते। 'यद्वो मुद्रं पितरः इत्यथर्ववेदीयमन्त्रे धनार्थे (रूप्यकार्थे द्रव्यार्थेवा) मुद्रमिति पदस्य प्रयोगाद् ज्ञायते यत् पुराकाले (वैदिकयुगे) राष्ट्रशासका राजान आदानप्रदानव्यवहारे सौविध्यर्थं स्वनामाक्षराङ्कितमुद्रया अर्धवालिस्तमात्रं यद्वा ततोऽपि न्यूनं चतुष्कोणात्मकं भूर्जादिपत्रं चिन्हितं कृत्वा धनरूपेण व्यवहर्तुमाज्ञापयाञ्चक्रुः। यतो हि यो मया व्यवहारः क्रियते, स केनाऽपि शिक्षितः,येन शिक्षितः, तस्यापि कश्चिद् शिक्षक इति रीत्या सर्वोऽपि व्यवहारः परम्परामूलः। तदित्थं राजनामाक्षराङ्कितमुद्रायाः प्रामाण्यबलेन वैदिकयुगे लिपेरस्तित्वं विश्वासपदवीमाटीकते। वैदिकयुगीयापेक्षया अद्यतनमुद्राया (मुहरपदार्थस्य) स्वरूपे वैलक्षण्यं स्यादिति तु अन्यत्। परन्तु वैदिकयुगेऽपि राजनामाङ्कितमुद्रायाः प्रचलनमासीत्। एवं भाषाविज्ञानदृष्ट्या, आधुनिकैतिह्यविदां मतानुसारेणच लिपिकलायाः प्रादुर्भावं विकासञ्च निरूप्य वैदिकमन्त्रदृशा

---

१. ऋग्वेदः १० मण्डलम् १० सूक्तम् ७५, मन्त्र ५
२. मुद्रा शब्दोऽङ्गुलीयकस्य पर्यायवाची। श्रीमदमरसिंह विरचित अमरकोषे द्वितीय काण्डे मनुष्यवर्गे १०८ तमे श्लोके एतदीयोऽशोद्रष्टव्यः।
३. १८।३।१६ अथर्ववेदः।
४. —पाणिनीयंसूत्रम्।

तत्र विचारः समुपस्थापितः । भौतिकध्वनिशास्त्र दृशा तु अकारादिध्वनेश्चिन्हं विलक्षणं विद्यते ।

वस्तुतस्तु अकारादिध्वनीनां लिप्यात्मकं यद्वा चित्रात्मकं स्वरूपं भौतिकशास्त्रं विना निर्णेतुं दुरूहम् । भाषावैज्ञानिकैर्ध्वनीनां यल्लिप्यात्मकं स्वरूपं प्रतिपाद्यते, तत्तु देशस्य भाषायाश्च भेदानुसारेण विभिन्नरूपत्वाद् अवैज्ञानिकम् । यथा अकारोदेवभाषायां 'अ, अ' इत्येवम्, आंग्लभाषायां रोमनलिप्यां A' इत्येवं रेखया अङ्कीक्रियते । एवञ्च अत्र एकस्यैव अकारस्य भिन्नं लिप्यात्मकं स्वरूपं दृश्यते । भाषाविज्ञानं खलु अकारादिध्वनेः सामान्यं मानवेषु व्यवहृतञ्च रेखयाऽङ्कितं स्वरूपं व्याख्याति, रासायनिको यद्वा भौतिक इव ध्वनेश्चित्राङ्कनकार्यं कर्तुमक्षमम् । वैज्ञानिकं वास्तविकञ्च ध्वनेश्चित्रमेतद्भिन्नम् । ध्वनीनां यथार्थं स्वरूपं ज्ञातुं मानवीयबुद्धिहृदयादितत्वस्य, अथच भौतिकशास्त्रस्य ज्ञानमपेक्षितम् ।

सर्वत्र देशे यस्याङ्कनमुच्चारणञ्च समाने, तदेव वैज्ञानिकं भौतिकशास्त्रसमन्वितञ्च ध्वनेश्चिन्हं (लिपिः) चित्रं वा स्वीकर्तव्यम् । यथाऽस्माकं मूर्तिश्चित्रपटे क्रियते, तच्छायाचित्रं दृष्ट्वा उच्यते 'अयं देवदत्तः, अयं यज्ञदत्तः, इति । तथैव रीत्या ध्वनेरपि मूर्तिर्ध्वन्यभिलेखना१दियन्त्रेषु यान्त्रिकक्रियया निष्पाद्यते, तदेव च ध्वनेर्वास्तविकं रेखयाङ्कितं स्वरूपम् । वक्तुर्मुखान्निःसृता ध्वनयो ध्वन्यभिलेखनयन्त्रस्य परिवृत्तात्मके मण्डलके२ लिपिरूपेण स्थायिनः३ क्रियन्ते । ध्वन्यभिलेखनयन्त्रस्थतनुपटसंश्लिष्टा एका सूचिका तीक्ष्णाग्रभागेन ४मण्डलकं संस्पृशति । ध्वन्यभिलेखनक्षणे मण्डलकं शनैः शनैः परितोभ्राम्यति ।

---

1. Into the phonograph
2. Record=मण्डलकम्,
3. Recorded
4. The plate of a gramophone

यदा ध्वन्यभिलेखनयन्त्रस्थस्य तनुपटस्य पुरःसराणि गायकेन यद्वा वक्त्रा गीतं वाद्यं वा गीयते, समुच्चार्यते च तदा तनुपटोऽपं ध्वन्यनुरूपि परिस्पन्दं कुरुते । ततस्तत्संश्लिष्टसूचिकाऽपि ध्वन्यनुरूपपरिस्पन्दिततनुपटस्पन्दनानुरूपं क्षुभ्यमाणा परिभ्राम्यमाणे मण्डलके ध्वन्यनुरूपमुच्चावचं वक्राकृतिकगर्तं क्रमेण रेखया निर्माति । तदेव ध्वनेर्वास्तविकं रेखयाऽङ्कितं 'स्वरूपम् । 'ध्वनेः आकृतिः, तस्य वक्रता वा कीदृशी ?' इत्येतज्ज्ञानं ध्वनिवक्रताङ्१कनयन्त्रेण कर्तुं शक्यते, नान्यथा । उच्चार्यमाणा अकारादिध्वनयो लोहादिफलकानामुपरि पतितेषु रजः कणेषु, सिकतासु, द्रवीभूतेषु जतुषु च स्वानुरूपं चित्रं निर्मान्ति ।

एवमुपर्युक्तं रेखयाङ्कितं ध्वनेः स्वरूपं यथार्थं प्रतिभाति अस्माकं हृदः समुदभूताः विचारा वायौ स्वानुरूपाम् आकृतिं रङ्गञ्च गृह्णाति । एतच्च वैज्ञानिकैः सुष्ठुरूपेण परीक्षितम्२ । यद्येवमस्ति

---

१. मिलर ने फोनोडाइक नामक एक यन्त्र बनाया, जिससे ध्वनिवक्रखींचा जाता है । श्री ललित किशोर सिंह ध्वनिविज्ञान पृ. सं. १८५

२. जब हम विचार करते हैं, तब वायु में आकार और रङ्ग उत्पन्न होते हैं । उन विचारों को हमारे स्थूल नेत्र नहीं देख सकते । पेरिस के डाक्टर बेरडुक ने विचारों से वायु में जो चित्र बनते हैं, उनके फोटो लिये हैं । ले० स्वामी ज्ञानाश्रमः, प्रकाशकः डा० बालकृष्ण नागरः "सङ्कल्पसिद्धिः पृ. सं. ४७ विचारों का असर केवल फोटो प्लेट पर ही चित्र बनाना मात्र नहीं है, किन्तु विज्ञान से यह भी ज्ञात हुआ है कि विचार के समय विद्युत उत्पन्न होती है और उसका असर भी मिकनातीसी सुई द्वारा नापा गया है । जहां बिजली होती

तर्हि विचार्यमाणानां चिन्तनविषयीभूतानाम् अकारादिध्वनीनामपि वायौरूपम् रङ्गश्च समुत्पद्येते। किं बहुना यदाऽस्माकं बुद्धिः चिन्तनशीला, तदा मस्तके बुद्धिकेन्द्रे विद्युत् समुत्पद्यते । तया विद्युता च द्रवीभूते जतुजइव बुद्धिकेन्द्रे यद्वा बुद्ध्यवच्छिन्नाकाशे समेषां विचाराणामाकृतिरपि अङ्किता भवति । यद्येवं तर्हि अकारादिध्वनीनां विषयेऽपि सा क्रिया भवति ।

अकारादिध्वन्यनुरूपा आकृतिः बुद्धिकेन्द्रे ध्वन्यभिलेखनयन्त्र इव अवश्यमेव विलिख्यते। एतच्च तथ्यम् अस्माकं तन्त्रशास्त्रमपि पोषयति। मूलाधाराद् आब्रह्मविलं विलसन्ती विसतन्तुतनीयसी विद्युत् पुञ्जपिञ्जरा विद्यते१ । विवक्षायां सत्यां तया विद्युता द्रवीभूता अमृतधारा सौषुम्णाध्वना यदा शिरसि निपतति, तदा सा अमृतधारा एव ध्वन्यनुरूपां लिपिमयीम् आकृतिं दधाति । ध्वन्यनुरूपां ताञ्च लिपिम् ऋषयो ज्ञानचक्षुषा दृष्टवन्तः । ऋषीणामतीन्द्रियं यज्ज्ञानम्, तदस्माकं प्रत्यक्षमिव । तच्च ज्ञानं किमपि प्रमाणं प्रबाधितुं न शक्नोति । कण्ठताल्वादिस्थानेषु अकारादिध्वन्यनुरूपा रेखाकृतयो विद्यन्ते । ताश्च वर्णानां रेखाकृतयोऽमृतधारया निर्मिताः । तात्पर्यदीपिकायां कामधेनुतन्त्रे२ च अयं विषयः पुष्कलरूपेण प्रतिपादितः । यथा अकारस्य आकृतिः पञ्चकोणात्मिका, ककारस्य च कुण्डलीत्रयसंयुता । यद्वा ध्वनिविलेखन३यन्त्रे ध्वनयो विलिख्यन्ते, तथैव ताल्वादिस्थानस्य ऊर्ध्वपटले तेषामङ्कनं जायते । मानवकृतानिध्वन्यभिविलेखयन्त्राणि ईश्वरप्रणीत हृदयमस्तिष्कमुखादियन्त्रानुकृतिकानि तत्र निर्मिता लिपिरेव ध्वन्यनुरूपा । साच लिपिः अस्माकं चित्रमिव ध्वनीनामाकृतिं तदनुरूपतया व्यक्ती करोति ।

अत्र संक्षेपतः एवं बोद्धव्यम् । मुखान्निः सृता ध्वनयः अन्तःकरणाद् वहिर्देश त्रिविधं रेखयाङ्कितं स्वरूपं निर्मान्ति । तद्यथा--

१ घटपटादयो ध्वनयो यादृशं घटपटादिकं मनसि निधाय प्रोच्चारितास्तादृशं कम्बुग्रीवादिबिशिष्टं घटपटाद्यात्मकं चित्रं वायौ यद्वा काष्ठादिफलकेषु निर्मान्ति । वायौ ध्वनिभिरेतादृशं यच्चित्रं निर्मीयते, तद् अस्माकं चक्षुषा न प्रत्यक्षी क्रियते, तादृशचित्रस्य अतीवसूक्ष्मत्वात् । काष्ठादिफलकेषु

---

है, वहां आकाश के परमाणुओं में कम्पन होता है । इससे सङ्कल्प द्वारा प्रत्येक मनुष्य आकाश में परमाणुओं की गति को बदल देता है । परमाणुओं की गति पलटने से आकाश में रूप बनते हैं ।

अयमंशः 'सङ्कल्पसिद्धिः' इति पूर्वोक्ते ग्रन्थे द्रष्टव्यः ।

१. आधारादिषट्कमलदलेषु पातिता द्वादशन्तस्थितचन्द्रमण्डलात्सृता अमृतबिन्दवोऽकारादिक्षकारान्तवर्णात्मना परिणताः । उक्तं ह्याचार्येण--

मूलाधारात् स्फुरिततडिदाभा प्रभा सूक्ष्मरूपोद्गच्छन्त्यामस्तकमणुतरा तेजसां भूता ।
सौषुम्णाध्वचरणनिपुणा सवित्रानुविद्धाध्याता सद्योऽमृतमथ रवः स्रावयेत् सार्धसोमात् ।
शिरसि निपतिता या बिन्दुधारा सुधायाः भवति लिपिमयी सा पाभिरङ्ग मुखाद्यम् ।।

तात्पर्यदीपिका

२. श्रृणुतत्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा ।।

कामधेनुतन्त्रम् ।

3. In to the gramophone

च घटपटादिध्वनिभिस्तत्तदाकारं यच्चित्रं निर्मीयते, तत्तु चक्षुरिन्द्रियविषयार्हम् । परन्तु साधनद्वारा शब्दं तन्निष्ठां शक्तिञ्च साधुतया ये समुपासितवन्तः, तेषामेव घटपटादिध्वनिषु तादृशी शक्तिर्विद्यते, नान्येषाम् । एतादृशीशक्तिः आंशिकरूपेण अद्यतनेऽपि काले 'वायसफिगर्ज़' इत्याख्यस्य ग्रन्थस्य लेखिकायाः मिस वट्सह्यूजादेः ध्वनिषु दृष्टा१ ।

२ द्वितीयं रेखयाऽङ्कितं स्वरूपं संदेशाङ्कनयन्त्रेषु२ दृश्यते । सन्देशाङ्कनयन्त्रेषु रोमनलिप्यां ध्वनयः अङ्किता भवन्ति । यदा युष्मद् अस्मदाद्यर्थका 'आई, यू' इत्यादयो ध्वनयः समुच्चार्यन्ते, तदा ते ध्वनयः यन्त्रस्य तद्देशं स्वतरङ्गशक्त्या अभिहतं कुर्वन्ति, यत्र ते रोमनलिप्यामङ्किता भवन्ति । 'आई, यू' इत्यादिध्वनितरङ्गशक्त्या अभिहतो यन्त्रस्य स भागः कर्गलपत्रेषु तं ध्वनिं मसिद्वारा अङ्कितं करोति ।

३ ध्वनिविलेखनयन्त्रस्य मण्डलके१ ध्वनयो रेखयाऽङ्कीक्रियन्ते । अस्य व्याख्यानमितः पूर्वं कृतम् अतो नास्त्यस्य व्याख्यावसरः ।

अपरा च ध्वन्यनुरूपा आकृतिः बुद्धिकेन्द्रे ध्वन्यभिलेखनयन्त्र इव विलिख्यते । अस्यापि विवरणं पूर्वं सम्पादितम् ।

एषु रेखयाऽङ्कितेषु स्वरूपेषु ध्वनिविलेखनयन्त्रस्य मण्डलके, बुद्धिकेन्द्रे च अकारादिध्वनेर्यद अङ्कनम् तदेव ध्वन्यनुरूपम् । 'तत्कथं ध्वन्यनुरूपम्, अन्यच्च कथं न स्वीक्रियते ?' इत्येतत्सर्वं पूर्वमेव ध्वनिविलेखनयन्त्राकितस्य अथ च अमृतधारयाऽकितस्य स्वरूपस्य प्रतिपादनावसरे व्याख्यातम् । साधनद्वारा शब्दं तन्निष्ठां शक्तिञ्च सामुपासितवद्भिः प्रोच्चारितैः घटपटादिध्वनिभिः चित्रफलके यद् घटपटादि चित्रम् अङ्कीक्रियते तदपि ध्वन्यनुरूपतां न आवहति । घटपटादि चित्रं दर्शं दर्शं घटस्य चित्रं सुन्दरम्, अयं घटः' इत्येवं विभिन्नस्य वाक्यात्मकध्वनेः स्मरणात्, न तु 'घटः पटः, इति ध्वनिद्वयस्य । ध्वनिविलेखने यन्त्रे तु एकेन ध्वनिचिन्हेन सर्वस्मिन् काले एक एव ध्वनिरभिव्यज्यते ।

इतिशम् !

---

१. 'वायसफिगर्ज' पुस्तक की लेखिका मिसवट्सह्यूज ने शब्द के विज्ञान का चमत्कार क्रियात्मक रूप से लन्दन के लार्डलिटन शिल्पसदन में दिखाये थे । वह अपने बनाये सङ्गीत यन्त्र 'इडोफोन' को विधिपूर्वक बजाती थी, जिससे अनेकों प्रकार के रूप बन जाते थे । एक वार उसने डेजीनामक सुन्दर पुष्प की आकृतिः बनाई और उसकी व्याख्या भी की कि सङ्गीत यन्त्र को किस विधि से बजाने से ऐसा हुआ ।

फ्रांस की एक महिला · · विद्यार्थी ने कालभैरवाष्टक के स्तोत्र का गान किया । इससे एक भयङ्कर मूर्ति और कुत्ते की रेखायें अङ्कित हो गई ।

ले० पं० श्रीराम शर्मा आचार्य, डा० गौतमलाल चमन 'तन्त्र महाविज्ञान पृष्ठ सं० ४५६।

2. In to the telly printer

1- Into the record of the Phonograph, or Taperecord

# राजगोपाल-मंजरी

काव्यतीर्थ ज. व्यं. पल्लेवार एम. ए. एल. एल. बी. उपाख्य: जयेश पुसद (महाराष्ट्र)

### प्रथमो गुच्छ:-नमनम्

आचार्य राजगोपालं - गोपालराजमेवहि
कृत्स्नजनहृदानंदं नमामि चक्रवर्तिनम् ॥१॥
शीर्षं यस्यास्ति सुविलसितं शुभ्रकेशावशेषैः
स्कन्धाजानू परिविलसितं शुभ्रवस्त्रं विशालम्
भाले गन्धं कृशतरतनु सक्तकृष्णोपनेत्रम्
तं राजानं नृवरकुलजं चक्रवर्तिं नमामि ॥२॥

### द्वितीयो गुच्छ:-वंश:

चक्रवर्ति अय्यंगार: सनातनमतप्रिय:
आसीत्तस्य पिता पूज्य: वैष्णवधर्मपालक: ॥३॥
असामान्यगुणै: श्रेष्ठ: सामान्यकुलज्यपोऽसौ
वर्णधर्मे दृढा श्रद्धा आदर्शगृहमार्मिक: ॥४॥

### युग्मकम्

सालेम मंडलाधीने अय्यंगारेन भूषिते
भोरापल्लीलघुग्रामे पवित्रे स्वस्वनिकेतने ॥५॥
आचार्यराजगोपाल-रूपेण खलु भारते
ब्राह्मणस्य कुले जात: चक्रवर्ती नृपो ननु ॥६॥
धर्मपरायणापत्नी अवमेल्मन्गम्मला
जननी पंचबालानां गृहलक्ष्मीस्तु मंगला ॥७॥
तस्य नमागिरी नाम्ना ज्येष्ठ कन्यास्ति सोज्वला
यां ह्यपालयत्राजाजी नि:सीममातृमायया ॥८॥

### तृतीयोगुच्छ:-संस्कारा:

राजोचितै: गुणैर्युक्त: शैशवे लालितो गृहे
क्रमश: वर्धिता वुद्धि: शुक्लचन्द्रकलायथा ॥९॥

### युग्मकम्

महाविद्यालये तेन बेंगलोरपुरे स्थिते
'सेन्ट्रल' इति विख्याते मद्रास पत्तने तथा ॥१०॥
महाविद्यालये चापि कृत्वाध्ययनमूर्जसा
व्यवसायं विधिज्ञस्य प्रविवेश नवोजसा ॥११॥

## चतुर्थोगुच्छः–व्यक्तिदर्शनम्

वयसा वर्धितश्चापि युवाभवद्धि चेतसा
श्री चक्रवर्तिराजाजी वृत्तिना सात्विको सदा।।१२।।
बहुधा पुरुषाः लोके प्रकटं प्रियवादिनः
विरलाः पुरुषाः लोके प्रखरसत्यवादिनः ।।१३।।
प्रियान लोकप्रियताहि तस्य-तत्वप्रियोऽस्ति प्रखरःप्रकामम्
देशाभिमानी मतिमानतीव-सेवासुसाध्यान च मन्यते वै।१४।।
महतां जीवने स्वप्नः सत्येन जीवनायते
स्वप्नासत्येन किंच्चिन्न स्वप्नायते तु जीवनम् ।।१५।।
राजसवृत्तिभूतेन राजयज्जनमानसे
सः राजाजीपदे नीतः 'राजा' राजा' इति ब्रुवन् ।।१६।।
वाचा यदुक्तममलं विशृद्धबुद्ध्या
भावेन धर्मचरितं खलु सर्वभक्त्या
भेदः सदा विगलितः पटु वाग् प्रयुक्त्या
कार्येषु देहः निहितः खलु सर्वशक्त्या ।।१७।।
वात्सल्यपूर्णहृदयः किल चक्रवर्ती
सुस्नेहभावभरितो भवति प्रकामम्
प्राराधितः प्रतिदिनं जनतान्तरात्मा
विस्फारितं निखिलभारतमानधाम ।।१८।।
विशद्धपक्षैः प्रतिपादितानि ।
निशम्य सर्वाणि मतानि सम्यक्
विरोधिभावं यदि वास्ति तस्य ।
तथापि चेतो न चचाल तस्य ।।१९।।

### युग्मकम्

स्वदेशभक्तोऽपि हि विश्वमित्रम्-
पौराणिकोऽसौ हि सुधारकोऽयम्
स्नेहेन तप्तहृदयोऽपि शीतः
विज्ञानवादी हि कलारसज्ञः ।।२०।।
पारंपरीयोऽपि नवप्रवक्ता-
नीतिज्ञऽषोऽपि हि धर्मनिष्ठः
सुसंगतिः किन्न गुणेषु तस्य
भिन्नस्वराणामिव गायकस्य ।।२१।।

विधूतवैराणि विरोधनानि
विचारवैशिष्ट्य-विवेचनानि
विनोदवैपुल्यविलासनानि-
विन्यस्तवैष्णवविवेचनानि ।।२२।।
धीयो न्यासश्च राजाजी ।
कृत्स्नभारतवासिनाम्
संज्ञानस्य तथा गान्धेः सदा भवतु रक्षकः ।।२३।।
मोहनस्यासीद्राजाजी-संज्ञानस्य सुरक्षकः
तथा विश्वासपात्रोहि सर्वकार्येषु सर्वदा ।।२४।।
धन्योऽसि राजाजी विचारवित्तैः ।
यैश्च समाकृष्यत मोहनोऽपि
इतः स्तुतिः ते किमु न प्रयोज्या ।
यत्गांधिमप्युच्चतरो विभासि ।।२५।।
सुसंस्कृतत्वेन निवेदितं वपुः ।
विचारवित्तेन निवेदितं वयः
विद्याविलासेन निवेदितं वसु ।
मनोहरत्वेन निवेदितं मनः ।।२६।।
नेदं नभो मंडलचन्द्रचक्रं ।
नेदं च तारागणतेजचक्रम्
नासौ मुरारिधृतहस्तचक्रः
एषोऽहि राजाजी धृतनामचक्रः ।।२७।।
ये मानवाः देश विकासकार्ये ।
कर्तुं निकामं सततं यतन्ते
स्वजीवनं चंदनमेव कर्तुं ।
ते वा महान्तो न कथं भवन्ति ।।२८।।

पंचमगुच्छ—जीवनकार्यम

एनीबिझंटस्य हि होमरूले ।
आरंभिता तेन जनस्य सेवा
विशालरूपेण परिस्फुटासा ।
नदी यथा सागरसख्यमेले ।।२९।।
आंग्लीयहस्ते पतितोऽस्तिदेशः ।
आंग्लैस्त्यजेतभारतभूमखंडम्
इत्येव घोषेण महात्मनावै ।
आन्दोलनं सन्निहितं जनस्य ।।३०।।

क्रमशः

गुरुकुलकांगड़ीविश्वविद्यालयस्य दीक्षान्तमहोत्सवे

## भारतस्य प्रधानमन्त्रिपदमलंकुर्वाणायाः श्रीमत्या इन्दिरादेव्याः करकमलयोः

# अभिनंदन–पत्रम्

### विश्ववन्द्ये प्रधानमन्त्रिमहाभागे !

पुण्योऽयं दिवसः खलु यस्मिन् गिरिराज-हिमालयस्योपत्यकायां परमपावन्या भागीरथ्याः शुभ्रशीतलपयसा धौतचरणायामस्यां तपोभुवि विराजितस्य गुरुकुलकांगड़ी विश्वविद्यालयस्य वयं समेऽपि कुलवासिनः श्रीमत्याः शुभागमनं हृदयेनाभिनन्दामः। भवत्या महनीयव्यक्तित्वानुरूपं स्वागत-सम्भारसमर्जने न क्षमा वयमिति नितरां संकोच-मनुभवामः। तथापि भावग्रहणप्रवणया श्रीमत्यास्माकं 'पत्रं पुष्पम्' अङ्गीकृतमिति नूनं कृतज्ञाः स्मः।

### अयि दिव्यज्योतिर्मयि !

श्रीमत्यास्तेजस्विनि नेतृत्वे राष्ट्रस्य वीर-सैनिकैर्दुर्दान्तोऽपि रिपुः पराक्रान्तः, क्रूरतमानामाक्रान्तृणां हस्ताद् बंगलादेशो मोचितः, स्वाधीन-भारतस्य च कोटिकोटिजनमनःसु राष्ट्राभिमानस्य नवद्युतिः प्रद्योतिता। एतेन पूतेन कृत्येन लंका-विजयप्रसंगे रामस्यौदार्यं संस्मरामो वयम्। अत्रभवत्याः सत्यं न्यायं च प्रति परिनिष्ठिता नीतिःसर्वत्र भारतस्य प्रतिष्ठां शिखरमारोपितवती। गरिमान्वितायाः श्रीमत्याः प्रतिभा कर्तृत्वशक्तिश्च राष्ट्रं सर्वतोमुखसमृद्ध्याः स्वात्मनिर्भरतायाश्च नवीनं मार्गं प्रादर्शयत्। चिरान्निद्रिते पद्दलिते चापि वर्गे नूतनाया आशायाः स्फूर्तेश्च संचारः सञ्जातः।

विशिष्टशिक्षादीक्षयोर्यैस्तत्त्वैः श्रीमत्याम् असाधारणकर्तृत्वशक्तिर्विकसिता, तेषु वर्तते नूनमिदमप्येकं यद् भारतस्याध्यात्मिकी संस्कृतिः पाश्चात्यदेशानां च भौतिकविज्ञानविद्येत्युभयमपि समन्वितरूपेण भवन्मनसि पदं निधत्ते। उभय-विधोऽप्यादर्शो भवत्या स्वजीवने चरितार्थतां नीतः। प्रभोरस्या वेदवाण्या उच्चारणस्य यत्सत्यं भवती पात्रतां प्राप्ता——

'कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः।'
'अहं राष्ट्री संगमनी।'
'अहं जनाय समदं कृणोमि।'
'एतावती महिना संबभूव।'

इतः एकसप्ततिवर्षपूर्वं श्री स्वामिश्रद्धानन्दवर्यैः प्रतिष्ठापितोऽयं गुरुकुलविश्वविद्यालयोऽपि भवत्या स्वीकृतान् समन्वयपोषकान् आदर्शान् शिक्षाक्षेत्रे प्रसारयति। आधुनिक-वैज्ञानिकविषयैः साकं प्राच्यभारतीयसंस्कृतेरपि शिक्षणं प्रारम्भत एव गुरुकुलस्य लक्ष्यभूतम्। एतां शिक्षापद्धतिमनुसृत्य बालकानामिव बालिकानामपि शिक्षणे भृशं दत्तावधानोऽयं विश्वविद्यालयो यथास्मिन् हरिद्वारनगरे बालकानां तथैव देहरादून-नगरे बालिकानां महाविद्यालयान् सुव्यवस्थितरूपेण प्रचालयति। उभयत्रापि भारतस्य विभिन्नेभ्यः प्रदेशेभ्यश्छात्रा विविधज्ञानविज्ञानजातं सदाचारं च शिक्षितुमागच्छन्तीति नूनमियं राष्ट्रीयस्तरस्य संस्था विद्यते।

गुरुकुलस्य स्थापनाकाले देशेऽस्मिन् वैदेशिकानां प्रभुताऽवर्तत। परं संस्थेयं देशभक्ते राष्ट्राभिमानस्य च बीजात् प्रादुर्भूता। अत एव ब्रिटिश-

शासकैः स्वयमागत्य पुरत उपहृतमपि प्रभूतवित्त-राशिम् एतत्संचालकास्तिरश्चक्रुः, नैकविधं संकटं काठिन्यं च वहन्तोऽपि स्वाभिमानव्रतं न विजहुः। एतद्व्रतानुरूपमेव गुरुकुलमिदम् आदित एव राष्ट्र-भाषामाध्यमेन ज्ञानविज्ञानानां शिक्षां प्रयच्छति। गुरुकुलस्य विकासो निरन्तरं विशुद्धराष्ट्रियवाता-वरणे भवतीति कृत्वैव महात्मागांधी, दीनबन्धु एंड्रूज, रवीन्द्रनाथ ठाकुर, बाबू राजेन्द्रप्रसाद, जवाहरलाल नेहरू, वल्लभभाई पटेल, मदनमोहन मालवीय, लाला लाजपतराय, राधाकृष्णन् प्रभृ-तीनां राष्ट्रकर्णधाराणां स्नेहाशिषोप्येतेन समा-सादिताः। स्वाधीनतासंग्रामस्य सर्वेष्वेवान्दोलनेषु गुरुकुलेन विशिष्टः सक्रिययोगो दत्तः। श्रीमत्यापि तस्मिन् महति कुले जनिर्लब्धा यद् राष्ट्रनिर्मातृणां गौरवास्पदं कुलमिति प्रख्यातिं लभते। एवं गुरुकुलमिदं भवत्या यशस्विकुलेन परमं साम्यं भजते। अतएव भवत्कुलजानां भवत्याश्च स्नेहो-ऽप्येतेन लब्धः, स चास्माकम् अमूल्यो निधिः।

शिक्षायाः क्षेत्रे सर्वविधं साम्प्रदायिकं भेद-भावमपाकृत्य विशुद्धसमताया व्यवहारो गुरुकुल-जीवनस्य मूलभूता नीतिः। स्पृश्यत्वास्पृश्यत्वम्, उच्चत्वनीचत्वम्, धनित्वनिर्धनित्वम् इत्यादिप-क्षपातैर्न कदाप्येतस्य कुलस्य वातावरणं विकृतम्।

राष्ट्रस्य गम्भीरसमस्यासु सततं निरतयाप्य-त्रभवत्याऽस्य विश्वविद्यालयस्य नवस्नातकान् निवासिनश्च निजेनाशीर्वादेन कृतार्थयितुं स्वकीयो बहूमूल्यः समयो व्ययीकृत इति सत्यमेव गुरुकुलस्य गौरवं वृद्धिं गतम्। सुखदेयं स्मृतिः सदैवास्माकं हृत्पटलेष्वंकिता स्थास्यति, सदैव चास्मभ्यम् उच्चादर्शाननुसर्तुं प्रेरणां स्फूर्तिं च प्रदास्यति। श्रीमत्या दिव्यज्योतिषा प्रालोकितेन भावाभिभूतेन च हृदयेन समस्ता अपि कुलवासिनो वयं पुनरपि भवतीं हार्देनाभिनन्दनेन सभाजयामः, कामयामहे च भवत्कृते दीर्घायुष्यम् अक्षयां च शक्तिं, येन राष्ट्रमिदं भवदाचरितैर्गुरुभिः क्रियाकलापैः सुचिरं लाभान्वितं भूयादिति।

वयं स्मो,

दिनांक : १३ अप्रैल १९७३ भवद्गुणानुरक्ताः

शुक्रवासरः गुरुकुल कांगड़ी विश्वविद्यालयस्य

कुलवासिनः

# सम्पादकीय टिप्पण्यः

## गुरुकुल कांगड़ी विश्वविद्यालयस्य दीक्षान्तमहोत्सवे

## प्रधानमन्त्रिमहोदयायाः श्रीमत्या इन्दिरादेव्या आगमनं दीक्षान्तभाषणम् च

त्रीसप्तत्युत्तरैकोनविंशतिशततमे ईस्वीये अप्रेल-मासस्य त्रयोदशतारिकायां तदनुसारं वैशाख-मासस्य प्रथमदिने प्रातः दशवादनसमये भारत-वर्षस्य प्रधानमन्त्रित्वमलंकुर्वाणा श्रीमती इन्दिरा देवी गुरुकुलस्य नवस्नातकेभ्यो विविधोपाधि वितीर्य दीक्षान्तभाषणमददात् । तां दर्शं दर्शं मनसि विचार गतं समुत्पन्नं यत्र सा केवलं स्त्रीजनसुलभोचितं सुकुमारं शान्तं कान्तं वपुर्धत्ते प्रत्युत तस्या अन्तस्त-लात् प्रबला अग्ने. स्फुलिंगा अपि परितः परिस्फु-रन्ति । तां च परितः प्रेरकमत्युग्रं प्रभावोत्तेजकं राजनीतिकवातावरणमपि पर्यवारयत् यच्च यत्र कुत्रापि सा गच्छति तया सह तत् वाता-वरणमपि प्रचलति । सत्यं सा दुर्गा चण्डी काली-त्यादि नामभिः स्मर्तुं शक्यते । न सा सामान्या स्त्री । जगदुत्पत्तिस्थितिप्रलयकर्त्रा परमात्मना राजनीतिक्षेत्रे युगपरिवर्तनाय जड़धियामनुदारवृत्ति परायणानां पर्यवरोधस्यापवारणाय दृढोत्साहसंकल्प-वती सा देवी पृथिव्यां सम्प्रेषिता । अन्यैरतर्कितं यथोचितसमयानुरूपं सा पदं धत्ते इति चिन्तं-चिन्तं महदाश्चर्यं भवति । गुरुकुले हरिद्वारे च यत्र यत्र सा पदं धृतवती तस्या आवागमनस्य यो मार्गो निर्धारित आसीत् तस्यैव कायाकल्पः समजायत । अस्य तात्पर्यमेतत् यत् देशे यत्र मार्गादीनां पण्य-वीथीनां ग्रामाणां वा दुर्दशा स्यात्, श्लथनिर्माणं वा जायेत उद्योगादीनां निर्माणसंरम्भे सर्वकार कार्यकर्तॄणामुपेक्षा दृगोचरीभवेत् तत्रैवास्या देव्याः चरणारविन्दरजः पतत्वित्येष प्रयत्नो विधेयः ।

गुरुकुल कांगड़ी विश्वविद्यालयस्य दीक्षान्त-पद्धतिः प्रारम्भादेवापूर्वाऽन्यत्राप्रचलिता विलक्षणा च विश्रुता लोके । यज्ञात् प्रारभ्यते सा । प्राक्तन कालात्समायात औपनिषदर्षीणां सत्योपदेश आदेशो वा नवस्नातकेभ्यः संश्राव्यते काश्चन प्रतिज्ञाः कार्यन्ते च । अस्मिन् वारे प्रधानमन्त्रिमहाभागया ऽपि यज्ञे घृताहुतिप्रदानं विहितम् । अस्मिन् गुरुकुले प्रारम्भादेव पाश्चात्यपौरस्त्यसमन्विता शिक्षा-पद्धतिः प्रचलतीति सर्वैः बोध्यम् । श्रीमत्या देव्या ऽपि स्वकीयभाषणे तस्या एव परिपोषणं विहितम् । श्रीमतीमिन्दिरादेवीं विलोक्य सहसा सूक्तिरेषा प्रतिबभौ "महती देवता ह्येषा नररूपेण तिष्ठतीति" परमेतदपि वयं निस्संकोचं ब्रूमो यद् भारते ये भ्रष्टाचारादिदोषाः समुत्पन्नाः देशस्य चारित्र्यभ्रंशः सञ्जातस्तेषामुन्मूलनमस्या देव्या भाग्ये न प्रती-यते । काऽप्यन्या महती देवता समुत्पत्स्यते या देशस्य सत्यं शिवं सुन्दरं रूपं जनिष्यतीति । अन्ते वयं श्रीमत्या इन्दिरादेव्या अभिनन्दनं कुर्मः ।

भगवद्दत्तो वेदालंकारः

# साहित्य समीक्षा

## सविता (सुपर्णाङ्क)

सम्पादक--श्री विश्वदेव ।

प्रकाशक--वेदसंस्थान, बाबू मोहल्ला, व्यावर रोड, अजमेर ।

पृष्ठ संख्या १३३, प्रस्तुत अंक का मूल्य--३)

वेद-संस्थान की सविता पत्रिका के २५ वर्ष पूरे हो चुके हैं । २६वें वर्ष में पदार्पण करते हुए प्रथम बार सुपर्णाङ्क के रूप में यह विशेषाङ्क प्रकाशित किया गया है । इस विशेषाङ्क में वैदिक-साहित्य में समुपलब्ध सामग्री को मुख्यता दी गई है । इस विशेषाङ्क के १३३ पृष्ठों में से ९३ पृष्ठ श्री अभयदेव जी तथा उनके सहयोगी श्री बद्रीप्रसाद पंचोली के ही सुपर्ण सम्बन्धी विचारों व विवेचनों से ओत-प्रोत हैं । दोनों ही विद्वानों के सह विवेचन में प्रौढ पाण्डित्य तथा सूक्ष्म विवेचन शक्ति का आभास मिलता है । इनकी भाषा व शैली परिमार्जित, सुललित व प्रवाहपूर्ण है । अन्य विद्वानों के लेख भी उच्च कोटि के हैं । एक प्रकार से यह सुपर्णाङ्क पठनीय व संग्रहणीय है । सम्पादकमण्डल बधाई का पात्र है ।

इस सम्बन्ध में विशेष वक्तव्य हमारा यह है कि किसी एक देवता व एक शब्द को लेकर विशेषाङ्क निकालना अति कठिन है । यह कठिनाई हमें कई वर्ष पूर्व गुरुकुल पत्रिका के विष्णु-अंक के प्रकाशन के समय अनुभव में आयी थी ।

## हल्दी (घरेलु औषध-१)

लेखक- स्वामी ओमानन्द सरस्वती ।

प्रकाशक-हरयाणा साहित्य संस्थान, गुरुकुल झज्जर (रोहतक) ।

पृष्ठ संख्या ५३ मूल्य ५० पैसे ।

सामान्य मनुष्य चाहे जंगल, ग्राम, कसबे और बड़े नगर किसी भी स्थान में निवास करते हों प्रायः सभी छोटे मोटे रोगों पर वैद्य हकीम व डाक्टर का द्वार नहीं खटखटाते । अपने घर खेत आस पड़ोस में सुगमता से जो भी घरेलु उपयोगी वस्तु मिल जाये झट उसी का उपयोग वा सेवन करते हैं । किन्तु दैनिक प्रयोग में आने वाली हल्दी, नमक, धनियां, अदरक जीरा आदि वस्तुओं के यथोचित गुणों का ज्ञान न होने से अनेक रोगों की चिकित्सा इनके द्वारा भली भांति वे नहीं कर सकते । जिन हल्दी, नमक आदि का सभी लोग प्रतिदिन सेवन करते हैं, उनके द्वारा उनके रोगों की वे स्वयं चिकित्सा भी कर सकें इसी कल्याण की भावना से स्वामी जी महाराज ने घरेलु औषध नामक ग्रन्थ माला का प्रथम पुष्प 'हल्दी' आपकी सेवा में प्रस्तुत किया है । इस में सामान्य रूप से रोगों के निदान वा पहचान, चिकित्सा उपचार पथ्य और अपथ्य पर भी प्रकाश डाला है ।

स्वामी जी महाराज ने सामान्य जनोपयोगी 'ब्रह्मचर्य साधन' दस पुष्पों में प्रकाशित किया, हरियाणा के योधेयों का इतिहास लिखा, मुद्राओं सम्बन्धी सचित्र महान् ग्रन्थ के प्रकाशन की भी तैय्यारी है । उधर घर-घर जाकर आर्यसमाज से सम्बद्ध उपयोगी पुस्तकों की बिक्री भी कर रहे हैं । यह सब देखते हुए हमें महान् आश्चर्य होता है कि इस घुमक्कड़ फक्कड़ स्वामी को लिखने का समय कहां से मिल जाता है ।

यह इनकी तप त्याग संवलित साधना तथा संकल्प शक्ति का परिणाम है, सब को इनकी पुस्तकों का अवश्यमेव अध्ययन करना चाहिये । ★

# वेदादि शास्त्रों में अहिंसा

वेदानन्द वेदवागीश, महाविद्यालय गुरुकुल झज्जर (रोहतक)

सरिता मासिक पत्रिका के फरवरी (द्वितीय) १९७३ अंक ४२९ में श्री सुरेन्द्रकुमार शर्मा "अज्ञात" का एक लेख प्रकाशित हुआ, लेख का शीर्षक है– "रक्त सने पृष्ठ बुद्ध और महावीर के, "अहिंसा परमो धर्मः" के देश में इतनी हिंसा क्यों? लेखक के इस लेख में जनता के हित की बात दृष्टिगोचर नहीं होती। पाठकों को उनके लेख में धर्म ग्रन्थों पर कुठाराघात किया जाना प्रतीत होगा। लेखक अपने लेख को इस चालाकी से लिख रहा है कि वह स्वयं लेख के दोष से बच सके। अन्यथा अपने लेख का मोड़ वे दूसरी ओर भी कर सकते थे, कह सकते थे, आमिष भोजी लोगों ने कुछ धार्मिक ग्रन्थों में मांस मदिरा का प्रक्षेप किसी काल में बहुत किया है, इस लिये वे "रक्त सने पृष्ठ" बन गये। इनका शोधन आवश्यक है।

श्री सुरेन्द्रकुमार शर्मा "अज्ञात" ने सबसे पहले वेदों को ही अपनी लेखनी का विषय बनाया है। वेदों को भारतवर्ष में रहने वाले सभी आर्य वा सनातन धर्मी ईश्वर की वाणी मानते हैं और इस दशा में वेदों में मांस मदिरा का प्रतिपादन किया जाना एक अनोखी बात होगी।

श्री शर्मा जी के उल्लेख का उत्तर देने से पूर्व हम पाठकों को वह कसौटी देना चाहते हैं, जिसे वे भी स्वीकार करेंगे। वह यह है– मांस खाने वाला लेखक अपने ग्रन्थों में कभी भी मांस न खाने का प्रतिपादन नहीं करेगा, और इसी तरह मांस न खाने वाला, मांस सेवन किये जाने की वकालत नहीं करेगा। कोई भी लेखक अपने प्रणयन में परस्पर विरोधी बातें नहीं लिखेगा। जब मानवकृतियों में यह नियम है, तब ईश्वर व ऋषि कृत ग्रन्थों में परस्पर एक दूसरी बात को काटने का प्रसंग कैसे उपस्थित हो सकता है। पशुपति–ईश्वर का नाम है, यजमानस्य पशून् पाहि, यजमान–के पशु की रक्षा कर (देखिये यजु० १-१) मा हिंसीः तन्वा प्रजाः,–शरीर से प्रजा की हिंसा मत कर। (देखिये यजु० १२-३२) स्वधिते मैनं हिंसीः–वज्र के समान ए अध्यापक इसकी हिंसा मत कर (देखिये यजु० ६-१५) घृतेनाक्तौ पशूंस्त्रायेथाम्–घृत चाहने और यज्ञ करने वाली गौ आदि पशुओं की रक्षा करो (देखिये यजु० ६-११) अभयं न पशुभ्यः–पशुओं के लिये अभय दान हो (देखिये यजु० ३६-२२) द्विपादव चतुष्पात् पाहि – दो पैर वाले मनुष्यादि और चार पग वाले गौ आदि पशुओं की रक्षा कर (देखिये यजु० १४-८) अन्तकाय गोघातम्–गो–हत्या करने वाले को यमलोक पहुंचाओ (देखिये यजु० ४०-१८) इमं मा हिंसीः द्विपादं पशुम्–इस दो पैर वाले पशु की हिंसा मत कर (देखिये यजु० १३-४७) स्वस्ति गोभ्यः– गौवों का कल्याण हो (देखिये अथर्व० १-१३-४) यूयं गावो मेदयथाः कृशं–तुम सब कमजोर गायों को पुष्ट करो (देखिये अथर्व० ४-२१-६) अनागोहत्या वै भीमा कृत्ये मा नो गामश्वं पुरुषं वधीः– निरपराधी की हत्या करना भयंकर है, इस कर्तव्य में गौ, घोड़े और पुरुष को मत मार (देखिये अथर्व० १०-१-२९) पशूनां सर्वेषां स्फातिं गोष्ठे मे सविता करत्– गोशाला में मेरे पशुओं की वृद्धि ईश्वर करे। (देखिये अथर्व० १९-३१-१,५,६)

किन वस्तुओं के खाने का वेद विधान करता है वह भी सुनिये– व्रीहिमत्तं यवमत्तमथो माषमथो तिलम्–धान, जौ, उड़द और तिल खाओ

(देखिये अथर्व० ६-१४०-२)त आमं मांस मदन्ति पौरुषेयं च ये क्रिविः । गर्भान् खादन्ति केशवास्तानितो नाशयामसि––जो पुरुष में और पशुवों का मांस तथा गर्भों को खाते हैं, उनको मैं नष्ट करूं (देखिये अथर्व० ८-६-२३) मा गामनागामदितिं वधिष्ट––निरपराध गाय को मत मारो (देखिये ऋ० ८-१०१-१५) किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति धर्मम्–अनार्य प्रदेशों में तुम्हारी गौवें क्या करती हैं, वे न दूध ही दुहते हैं और नहीं घी बनाते हैं। ऐसे मनुष्यों का धन हर लो (देखिये ऋ० ३-५३-१४)

उदाहरण मात्र से ये इतने और इसी प्रकार के अन्य बहुत से प्रमाण होते हुए श्री सुरेन्द्रकुमार शर्मा "अज्ञात" की दृष्टि से ये सब अज्ञात होगये, यह बड़े आश्चर्य का विषय है, इसी से उनकी भावना लोगों के सामने प्रत्यक्ष रूप में आगई है। उनका लक्ष्य हिन्दुओं को उनके ग्रन्थों से घृणा कराना है, भला वे अपनी चेष्टा में कैसे सफल होंगें। उन्होंने अपने लेख में महर्षि दयानन्द पर भी आक्षेप किया है। हमने ऊपर जो यजुर्वेद के प्रमाण दिये हैं, उस पर श्री शर्मा जी उनका भाष्य उठाकर देखें तब उन्हें पता चलेगा कि वे किस दुनियां में रह रहे हैं। स्वामी दयानन्द के भाष्य में मांस मदिरा सेवन और गो हत्या निकाल कर दिखावें।

श्री सुरेन्द्रकुमार शर्मा ने कालक्रम के अनुसार पहले वेदों को लिया है उन्होंने ऋग्वेद १-२-१२ से १५ का उल्लेख किया है और कहा है कि इन मन्त्रों में शुनःशेप नामक पुरुष का वर्णन है, जिसे नरमेध में बलि चढ़ाने की तैयारी है। हम श्री शर्मा से कहना चाहते हैं कि वेदों में इतिहास नहीं है, इसकी जानकारी के लिये उन्हें इस प्रकार के उपलब्ध ग्रन्थों का अध्ययन करना चाहिये। इससे उनकी जानकारी बढ़ेगी, अन्यथा अज्ञान रूप पोखरों में ही गोते लगाते रहेंगे। तनिक इन मन्त्रों में आये शुनःशेप पर महर्षि दयानन्द का भाष्य देखें, वे लिखते हैं–शुनो विज्ञानवत इव शेपो विद्यास्पर्शो यस्यः सः। श्वाशुपायी शवतेर्वा स्याद् गतिकर्मणः।। (निरुक्त ३-१८)शेपः शपतेः स्पृशति कर्मणः। (निरुक्त ३-२१)विज्ञानवान् के समान जिसने विद्या का स्पर्श किया है, विद्या ग्रहण की है, वह शुनःशेप है। यह अर्थ करते हुये निरुक्त का प्रमाण भी दिया है। इसलिये मन्त्र में शुनःशेप कोई ऐतिहासिक पुरुष नहीं है। श्री सुरेन्द्रकुमार शर्मा शुनःशेप को ऐतिहासिक पुरुष मानकर आगे जो कुछ लिख रहे हैं,–वह वह सब अनर्गल है, वेद से उसका कोई सम्बन्ध नहीं है। हां ब्राह्मण-ग्रन्थों का निर्माण ऋषि ब्राह्मणों ने किया है इसलिये वे ग्रन्थ ब्राह्मण कहलाये, वे वहीं तक प्रमाण कोटि में आते हैं, जहां तक वे वेदानुकूल हैं। ऋषि लोग मन्त्र बनाने वाले नहीं हैं, मन्त्रों के अर्थों का साक्षात् करने वाले हैं। उनकी व्याख्या करने की शैली आख्यान वा इतिहास रूप में करने की है। ऋषेर्दृष्टार्थस्य प्रीति र्भवत्याख्यानसंयुक्ता (देखिये निरुक्त १०-१०-४६) इसी बात को निरुक्त टीकाकार स्कन्द भाष्य स्वीकार करता है। एवमाख्यानस्वरूपाणां मन्त्राणां यजमाने नित्येषु च पदार्थेषु योजना कर्तव्या। एष शास्त्रे सिद्धान्तः। आपचारिको मन्त्रेषु आख्यान समयः, परमार्थेन नित्यपक्ष इति सिद्धम्। सब मन्त्र आख्यान स्वरूप नहीं हैं, किन्तु जो भी हैं, उन आख्यानों स्वरूप मन्त्रों की योजना यजमानपरक और नित्य पदार्थों में कर लेनी चाहिये। यही शास्त्र में सिद्धान्त है। मन्त्रों में इतिहास-आख्यान

वाचक है। कभी ब्रह्म के अर्थ में ही सोम शब्द आया है।

वेद में सोमपायी साधक का वर्णन बड़े रोचक ढंग से किया गया है। ऋग्वेद के दशम मण्डल के ११९वें सूक्त में उस भक्तिरूपी सोम का पान करने वाले की महिमा का वर्णन बड़ा ही सुरम्य ढंग से किया गया है। जब योगी योग करता हुआ अपने मनोभावों को इतना संयम में कर लेता है कि वह उद्घोषणा हैं, करता है कि मेरी ये जो गौ और अश्वादि सम्पत्तियां इन सब को दान में दे दूं। क्योंकि मैंने इस प्रभु भक्ति रूपी सोम रस का पूर्णरूपेण पान किया है अब ये संसार के सभी पदार्थ मुझे तुच्छ लगते हैं[1]। केवल भगवान् का वह सोम अर्थात् ध्यान योग ही मैं मेरा मन लगा रहता है। अगले मन्त्र में फिर साधक कहता है कि झकझोर देने वाली झञ्झावत के समान पान किये हुए ये सोम रस अथवा भक्तिरस खूब आप्लावित कर रहे हैं[2] अर्थात् संसार के विषयों से मैं पूर्णरूप से उपराम होता जा रहा हूं जैसे शीघ्र गामी घोड़े रथ को अपने लक्ष्य की ओर उड़ा ले जाते हैं[3] उसी प्रकार जब से मैंने संसार से मोह कम कर योगाभ्यास कर, उस प्रभु की दिव्य ज्योति के दर्शन के लिए भक्तिरूपी सोम का पान किया है मेरा लक्ष्य या वह सोमरूपी योग मुझे मेरे लक्ष्य की ओर उड़ाये ले जा रहा है। जैसे अपने प्रिय पुत्र के पास गौवें रंभाती हुई चली[4] आती हैं उसी प्रकार योग करने के बाद भगवान् की कृपा वृष्टियां भी अनायास ही मुझे प्रभु के आनन्द में मस्त कर जाती हैं। आगे कहा है जैसे कुशल[5] कारीगर अपनी कला से प्रत्येक वस्तु का कलात्मक निर्माण करता है उसे सुन्दर बनाकर सब का मन मोह लेता है, उसी प्रकार जब से मैंने अपनी एक-एक चित्त वृत्ति[6] को वश में कर के पवित्र जीवन यापन करना प्रारम्भ किया तभी से भक्तिरूपी सोम का आस्वादन मुझे सरलता से आने लगा है। वास्तव में जब मनुष्य योगाभ्यास करता हुआ समाधि अवस्था को प्राप्त कर लेता है तो वह आनन्द कैसा होता है? इस की तुलना संसार के किसी भी भोग एवं पदार्थ से नहीं की जा सकती है। मैत्रायण्यपनिषद्[7] में स्पष्ट रूप से कहा गया है कि समाधि की अवस्था में पहुंचने पर अथवा साधक का चित्त पूर्ण रूप से योगाभ्यास द्वारा निर्मल हो जाता है सब प्रकार के मल धुल जाते हैं, उस अवस्था में जो ब्रह्मानन्द की अनुभूति होती है, उस का वर्णन लेखनी द्वारा तथा वाणी के द्वारा नहीं किया जा सकता वह तो केवल अनुभव करने का विषय है कहने सुनने का नहीं।

---

१. इति वा इति मे मन गामश्वं सनुयामिति। कुवित्सोमस्यापामिति।
२. प्रवाता इव देधत उन्मा पीता अयंसत। कुवित्सोमस्यापामिति।
३. उन्मापीता अयंसत रथमश्वाइश्वाश्वः। कुवित् सोमसीपमिति।
४. उपमामतिस्थित वाश्रा पुत्रमिवप्रियं। कुवित् सोमस्यापमिति।
५. अहं तष्टेव बन्धुरं पर्यचामि हृदाइति। कुवित् सोमस्यापमिति।
६. अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं देवबन्धुम्। तस्माउ राधः कृणुहि सुप्रशस्तं सखा नो परं च बन्धुः॥ (अथर्व० ५-११-११)
७ समाधिनिधूतमलस्ल चेतसोनियेशितस्यात्मनि यत्सुखं भवेत्। नशक्यते वर्णलितुं गिरातमा स्वयंतदन्यःकरणेन गृह्यते॥ (मैत्र० ४९)

—★—

# वेदेषु योगविद्यामूलम्

श्री आचार्य धर्मदेवो विद्यामार्तण्डः (देवमुनिर्वानप्रस्थ) आनन्दकुटीरम् ज्वालापुर

ओ३म् योगे योगे तवस्तरं वाजे वाजे हवामहे ।
सखाय इन्द्रमूतये ॥
ओं स घा नो योग आभुवत् स राये स पुरन्ध्या ।
गमद् वाजेभिरा स नः ॥
ओं युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य
बृहतोविपश्चितः ।
वि होत्रा दधे वयुनाविदेकइन्मही देवस्यसवितुः
परिष्टुतिः ॥ यजु. ११.४
ओ३म् अष्टाविंशानि शिवानि शग्मानि सहयोगं
भजन्तु मे ।
क्षेमं प्रपद्ये योगं च योगं प्रपद्ये क्षेमं च नमो
अहोरात्राभ्यामस्तु ॥ अथर्व० १९.८.२
ओ३म् आत्वाविशन्त्विन्दवः समुद्रमिव सिन्धवः ।
न त्वामिन्द्रातिरिच्यते ॥ साम० १९७
ओं युञ्जानः प्रथमं मनस्तत्त्वाय सविताधियः ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्याअध्याभरत् ॥
यजु. ११.१ ।
ओं युक्तेन मनसा वयं देवस्य सवितुः सवे ।
स्वर्ग्याय शक्त्या ॥ य. ११.२
ओं युक्त्वाय सविता देवान्त्स्वर्यतो धिया
दिवम् । बृहज्ज्योतिः करिष्यतः सविता
प्रसुवाति तान् ॥ यजु. ११.३

इत्यादिकेषु परश्शतेषु मन्त्रेषु योगयुक्तयुञ्जानादिशब्दानां प्रयोगो व्यक्तं दरीदृश्यते येषां प्रयोगः पातञ्जलयोगशास्त्रेऽन्येषु च योगविषयकग्रन्थेषु भूयोभूयोऽवलोक्यते । एतेन स्पष्टमिदं ज्ञायते यदितरासामनेकविद्यानामिव वेदेषु योगविद्याया मूलमपि सम्यगुपलभ्यते । को नाम योगः किं योगसाधनस्य लक्ष्यं, कानि तत्साधनान्यङ्गानि वा इत्यादिकानां योगसम्बद्धानां सर्वविषयाणां प्रतिपादनं वेदेषूपलभ्यते विस्तरभियास्य विषयस्य समासत एव निर्देशः करिष्यते मया । योगशब्दस्य प्रयोग उपरिलिखितेष्वन्यमन्त्रेषु च बहुत्रवर्तते तल्लक्षणं महामुनिना पतञ्जलिना 'योगश्चित्तवृत्तिनिरोधः' इति विहितम् । यजुर्वेदस्यैकादशाध्यायस्य ये प्रारम्भिकाश्चत्वारो मन्त्रा अस्य लेखस्योपक्रमे मयोदाहृतास्ते योगस्य मुख्यतत्त्वानि सम्यग् बोधयन्ति ।

निदर्शनरूपेणास्यैकादशाध्यायस्य प्रथममन्त्र इत्थमस्ति-युञ्जानः प्रथमं मनस्तत्त्वाय सविताधियः। अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ यजु. ११.१ ।

अस्मिन् मन्त्रे प्रयुक्तं युञ्जान इतिपदं योगसाधकवाचकम् ।

शतपथब्राह्मणे ६.३.१.१३ अस्यमन्त्रस्यव्याख्यानोऽभिहितम् "प्राणाः धियः" अतः धियः युञ्जानः इत्यंशः प्राणायामद्योतकः । मनोनिग्रहार्थं प्राणायाम आवश्यक इत्यनेन सूच्यते ।

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ (योगदर्शने १.३४) । इति सूत्रं मनोनिग्रहार्थं प्राणायाममावश्यकसाधनत्वेन निरूपयति ।

'मनो धियः युञ्जानः" इतिमन्त्रांशः प्रत्याहारं निर्दिशति यल्लक्षणं फलं च महामुनिना पतञ्जलिना

'स्वविषयासम्प्रयोगे चित्तस्यस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ।" (योगदर्शने २.५४) ।

ततः परमावश्यतेन्द्रियाणाम् (यो.द.२.५५) इतिरूपेण निरूपितम् ।

तत्त्वाय मनोधियः युञ्जानः इति संयमो यस्य लक्षणं महर्षिणा पतञ्जलिना 'त्रयमेकत्रसंयमः–

तदेतद् धारणाध्यानसमाधित्रयम् एकत्र संयमः इति व्यासभाष्ये ।

'अग्नेर्ज्योतिर्निचाय्य' अग्नेर्ज्ञानस्वरूपात्परमात्मनः इयं समाधेश्चरमावस्था ।

'पृथिव्या अध्याभरत्' इतियोगिनः कर्तव्यं निर्दिष्टम् योगिराजेन महर्षिणा दयानन्देन मन्त्रस्यास्यभाष्यं कृण्वता भावार्थ इत्थं निरूपितः

'योजनो योगं चिकीर्षेत संयमादिभिः अन्तः करणं पवित्रीकृत्य तत्त्वानां विज्ञानाय प्रज्ञा समज्यैतानि गुणकर्मस्वभावतो विदित्वोपयुञ्जीत । पुनर्यत् प्रकाशमानानां सूर्यादीनां प्रकाशकं ब्रह्मास्ति तद्विज्ञाय स्वात्मनि निश्चित्य सर्वाणि स्वपरप्रयोजनानि साध्नुयात् ।।" (यजुर्वेदे ११.१ भाष्ये-महर्षि दयानन्द सरस्वती) अस्य अध्यायस्य द्वितीयमन्त्र इत्थं वर्तते ।

युक्तेन मनसा वयं देवस्य सवितुः सवे । स्वर्ग्यायशक्त्या ।। (य.११.२) महर्षि दयानन्द कृतव्याख्या 'ऋग्वेदादिभाष्यभूमिकाया उपासनाप्रकरणेऽधोलिखितरूपेविद्यते 'सर्वेमनुष्या एवमिच्छेयुः (स्वर्ग्याय) मोक्षसुखाय (शक्त्या) योगबलोन्नत्या (देवस्य) स्वप्रकाशस्यानन्दप्रदस्य (सवितुः) सर्वान्तिर्यामिनः परमेश्वरस्य (सवे) अनन्तैश्वर्ये (युक्तेन मनसा) योगयुक्तेन शुद्धान्तः करणेन वयं सदोपयुञ्जीमहीति ।। भावार्थ इत्थं प्रत्यपादि महर्षिणास्वकीयवेदभाष्ये "यदि मनुष्याः परमेश्वरस्यसृष्टौ समाहिताः सन्तो योगं तत्त्वविद्यां च यथाशक्ति सेवेरन्–तेषु प्रकाशितात्मानः सन्तो योगं पदार्थविद्यां चाभ्यस्येयुः, तर्हिसिद्धीः कथं न प्राप्नुयुः ।।

तृतीयमन्त्रो ऽस्याध्यायस्येत्थं वर्तते

ओं युक्त्वाय सवितादेवान्त्स्वर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ।।

महर्षिदयानन्दकृता व्याख्या––एवं योगाभ्यासेनकृतेन (स्वर्यतः) शुद्धभावप्रेम्णा (देवान्) उपासकान् योगिनः (सविता) अन्तर्यामीश्वरः (युक्त्वाय) तदात्मसुप्रकाशकरणेन सम्यग् युक्त्वा (धियः) स्वकृपाधारवृत्या (बृहज्ज्योतिः) अनन्तप्रकाशं (दिव्यम्) दिव्यम् स्वस्वरूपं (प्रसुवाति) प्रकाशयति तथा (करिष्यतः) सत्यभक्तिकरिष्यमाणान् उपासकान् योगिनः (सविता) परमकारुणिकान्तर्यामीश्वरो मोक्षदानेनसदानन्दयतीति ।।

चतुर्थमन्त्रो विशिष्टतया महत्वपूर्णो योगस्वरूपादिविषयदृष्येति स उदाहि्रयते ।

ओं युञ्जते मन उत 'युञ्जते धियोविप्रा विप्रस्यबृहतो विपश्चितः । विहोत्रादधेवयुनाविदेक-इन्मही देवस्य सवितुः परिष्टुतिः ।।

श्वेताश्वतरोपनिषदो द्वितीयेऽध्यायेऽपि मंत्रोऽयं वर्तते तत्र श्रीमच्छंकाराचार्यकृतव्याख्यानमित्थं वर्तते यदुल्लेख्यम्-युञ्जन्ते योजयन्ति येविप्रा मनः उत युञ्जते धियः । इतराण्यपि करणानि धी=हेतुत्वात् करणेषु धी शब्दप्रयोगः विप्रस्य विशेषेण व्याप्तस्य बृहतो महतो ( विपश्चितः ) सर्वज्ञस्य देवस्य सवितुः महती परिष्टुतिः कर्तव्या । पुनरपि तमेव विशिनष्टि ।

(वि होत्रा दधे) होत्राः क्रिया यो विदधे (वयुनावित्) प्रज्ञावित् सर्वज्ञानात्साक्षिभूतएकोऽद्वितीयः । ये विप्रा मन आदि करणानि विषयेभ्य उपसंहृत्यात्मन्येवयोजयन्ति तैर्विप्रस्य बृहतो विपश्चितोमहतीपरिष्टुति-कर्तव्या । होत्रा विदधे वियुनाविदेकः सविता ।। श्री शंकराचार्याः ।

महर्षि दयानन्दसरस्वतीकृतास्य मन्त्रस्य व्याख्या-ऋग्वेदादिभाष्यभूमिकायामधोलिखितप्रकारेण विद्यते 'अत्र जीवेन सदा परमेश्वरस्यैवोपासना कर्तव्येत्याह। (विप्राः) ईश्वरोपासकामेधाविनः (होत्राः) योगिनोमनुष्याः (विप्रस्य) सर्वज्ञस्यपरमेश्वरस्य मध्ये (मनः) (युञ्जते) युक्तं कुर्वन्ति (उत) अपि (धियः) बुद्धिवृत्तीः तस्यैव मध्ये युञ्जते । कथंभूतः स परमेश्वरः सर्वमिदं जगत् यः (विदधे) विदधे तथा (वयुनावित्...) सर्वेषां जीवानां शुभाशुभानि यानि प्रज्ञानानि प्रजाश्रितानि यो वेद स वयुनावित् (एकः) स एकोऽद्वितीयोऽस्ति (इत्) सर्वत्र व्याप्तो ज्ञानस्वरूपश्च नास्मात् पर उत्तमः कश्चित् पदार्थो वर्तत इति तस्य (देवस्य) सर्वजगत्प्रकाशकस्य (सवितुः) सर्वजगदुत्पादकस्येश्वरस्य सर्वैर्मनुष्यैः (परिष्टुतिः) परितः सर्वतः स्तुतिः कार्या कथंभूता स्तुतिः (मही) महतीत्यर्थःएवंकृतेसति जीवाः परमेश्वरमुपगच्छन्तीति ।।

एवमस्मिन् मन्त्रे धारणाध्यानसमाधीनां सम्यङ्निर्देशोवर्तते । अस्यमन्त्रस्य भावार्थो महर्षिणा दयानन्देन समासत इत्थं न्यरूपि 'ये युक्ताहारविहारा एकान्ते देशे परमात्मानं युञ्जते ते तत्त्वज्ञानं प्राप्य नित्यं सुखं यान्ति ।।

सामवेदे योगतत्त्वप्रतिपादनम्——

सामवेद : प्रधानतयोपासनाप्रतिपादको वेदः ! उपासना योगाभ्यासेन विनाकथमपि न संभवति । सखायआनिषीदत पुनानायप्रगायत ।। साम५६८

इत्यादिमन्त्रेष्वासनप्रतिपादनमपि स्पष्टं यस्य स्थिरसुखमासनम् इति महर्षिपतञ्जलिकृतं लक्षणम् ।

सामवेदे समाधिदशायाः सजीवचित्रणम्——

अधोलिखितयोः साममन्त्रयोः समाधेः सजीवमतिविशदं च निरूपणं दरीदृश्यते ।

आत्वाविशन्त्विन्दवः समुद्रमिवसिन्धवः ।
नत्वामिन्द्रातिरिच्यते ।। साम. १९७, १९९ ।

अत्रेन्दुपदेन चन्द्रवत् सौम्यस्वभावानां शान्तदान्तानामुपासकाना योगिनां ग्रहणम् । ते परमेश्वरे तथा मग्ना भवन्तु यथा सिन्धवः–नद्यः समुद्रंप्रविशन्ति । तस्यां समाध्यवस्थायां हे इन्द्र–परमेश्वर । त्वामतिरिच्य त्वदतिरिक्तमत्यर्थः किमपि नावशिष्येत न कोऽप्यन्य विचारोऽवशिष्येत ।

अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः । अग्मन्नृतस्य योनिमा ।। साम० ९५९ ।

अस्मिन् मन्त्रेऽपि समाधिस्थदशाया वर्णनं स्पष्टम् यथा दुग्धवत्यो गावः अस्तं – गोष्ठं गोशालां वा प्रविशन्ति तथा चन्द्रवच्छीतलस्वभावाः सौम्या उपासकाः ऋतस्ययोनिं सत्यमूलं परमेश्वरम् आ–समन्तात् प्रविशन्ति – तस्मिन्नेव मग्ना भवन्ति ।।

अथर्ववेदे योगतत्त्वप्रतिपादनम्——

अथर्ववेदः प्रधानतया योगविद्याप्रतिपादक इति विपश्चितोमन्यन्ते। अथर्वशब्द एव विचारमिमं समर्थयति यतः थर्वतिश्चरतिकर्मा तत्प्रतिषेधः अथर्वेति श्रीयास्काचार्यो निरुक्ते १७.२. १९ प्राह ।

चर – गतौ । भ्वा. । निश्चलावस्थासम्पन्ना । अथर्वाणः तेषामयं वेदः तदवस्थातत्साधनप्रतिपादक इति भावः । काशकृत्स्नधातु पाठे १.२०९ थर्व हिंसायाम् इति पठितम् । अहिंसाव्रतधारी योगी अथर्वः । विस्तरभिया केवलं मन्त्रचतुष्टयमत्र निर्दिष्यते योगतत्वानां विशिष्टतया प्रतिपादकम् ।

(१) मूर्धानमस्य संसीव्याथर्वा हृदयं च यत् । मस्तिष्कादूर्ध्वः प्रैरयत् पवमानोऽधिशीर्षतः ।। अथर्व. १०.२.२६

अष्टाचक्रा नवद्वारा देवानां पूरयोध्या । तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः ।। अथर्व. १०.२.३१

तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते !
तस्मिन् यद् यक्षमात्मन्वत् तद्वै ब्रह्मविदोविदुः।।
अ. १.२.३२

एषु मन्त्रेष्वष्टचक्रादीनां हृदयप्रदेशस्य योगिना तत्र साक्षात् क्रियमाणस्य ब्रह्मणश्च विशदं निरूपणम् । एष्वन्तिममन्त्राधारेणैव मुण्डकोपनिषदि प्रतिपादितम्

'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् !
तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः ।।
मुण्डकोपनिषदि २.९

अथर्ववेदस्यैकादशकाण्डस्य चतुर्थं प्राणसूक्तं प्राणस्य स्वरूपं महत्वं प्राणायामादिलाभं च सम्यङ् निर्दिशति यस्मिन् प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते ।

प्राणो ह भूतं भव्यं च प्राणे सर्वं प्रतिष्ठितम् ।।
अ.११.४.१५

यो अस्य सर्वजन्मन ईशे सर्वस्य चेष्टतः ।
अतन्द्रो ब्रह्मणा धीरः प्राणो मानुतिष्ठतु ।। अ.११.४.२४ ।

इत्यादयो मन्त्राः सन्ति ।

योगविषयकमतिमुख्यं मन्त्रमथर्वसंहितातो महर्षिदयानन्दकृतव्याख्यासहितमुद्धृत्य लेखोऽयमुपसंहियते ।

अष्टाविंशानि शिवानि शग्मानि सहयोगं भजन्तु मे । योगं प्रपद्ये क्षेमं च क्षेमं प्रपद्ये योगं च नमोऽहोरात्राभ्यामस्तु ।। अ.१९.८.२ ।

महर्षि दयानन्दकृतं व्याख्यानम्—हे परमेश्वर-भगवन् ! कृपयाष्टाविंशानि (शिवानि) कल्याणानि कल्याणकारकाणि सन्त्वर्थाद्दशेन्द्रियाणि दश प्राणा मनोबुद्धिचित्ताहंकारविद्यास्वभावशरीरबलं-चेति ( शग्मानि... ) सुखकारकाणि भूत्वा (अहोरात्राभ्याम्) दिवसे रात्रौ चोपासनाव्यवहारं योगं (मे) मम (भजन्तु) सेवन्तां तथा भवत्कृपया-ऽहं (योगं प्रपद्ये च)योगं प्राप्य(क्षेमं च)प्रपद्ये क्षेमं प्राप्य योगं च प्रपद्ये । यतोऽस्माकं सहायकारी भवान्भवेदेतदर्थं सततं नमोऽस्तु ते ।। इत्थं योग-विद्यामूलं वेदेषु वर्तत इति समासतः प्रत्यपादि मया।।

# वेदेषु योगविद्यानिदर्शनम्

श्री जयदत्त शास्त्री, व्याकरणदर्शनाचार्य्यः, एम०ए०

वेदविदां श्रुतिपारदृश्वनां विदुषां सुनिश्चितमेतन्मतं यत् सर्वाः सत्यविद्या वेदेषु बीजरूपेण विद्यन्ते । तानि खलु विविधविद्याबीजानि विविधवेदमन्त्रेषु विकीर्णानि सन्ति । योगविद्याया बीजं चापि तत्र समुपलभ्यते । तदेतदुपरिष्टात् प्रतिपादयिष्यामः । पूर्वं तावद्योगपदार्थो विवेचनीयः । युज–समाधौ (दिवादिः) युजिर्––योगे (रुधादिः) इत्याभ्यां धातुभ्यां भावादौ घञ् प्रत्ययविधानाद् योगशब्दो निष्पद्यते । 'कश्छन्दसां योगमावेद धीरः (ऋग्वेद १०।११४।९) इत्यृङ्मन्त्र आद्युदात्तो योगशब्दो दृश्यते । तेन वञन्ततैव युजे र्युक्ता 'ञ्नित्यादिर्नित्यम् '(अष्टाध्यायी ६।१।१९७) इति प्रामाण्यात् । योजनं (चित्तवृत्तिनिरोधः-मनः समाधानं) योगः, युज्यते इति वा । एतेन समाधिः सम्मेलनं= सम्बन्धनं वोभयं योगपदार्थो भवति । तत्र समाधिरूपो योगो योगदर्शनादौ प्रसिद्धः । अन्योऽपि ज्ञानयोग-कर्मयोग-भक्तियोग-संन्यासयोगेत्यादिप्रकारको भगवद्गीतादौ वर्णितोऽस्ति सोऽयमुभयविधो योगो वेदेष्व वेषितुं शक्यते । यथा हि बीजं विना वृक्षोत्पत्तिर्न भवति तद्वत् सर्वं कार्यजातं कारणमूलकं वेद्यम् । पातञ्जलयोगशास्त्रादौ प्रसिद्धो योगो वृक्षरूपो विद्यते, अतस्तन्मूलं सर्वविद्याजन्मभूमौ वेदे कथन्न स्यादिति तर्कानुगतमेतत् । अथात्र श्रुति- (शब्द) प्रमाणमपि भवति ।

(१) यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ।।

(२) तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगोहि प्रभवाप्ययौ ।।

इति कठोपनिषदि ज्ञानेन्द्रियाणामेकत्रावस्थितिः स्थिरेन्द्रियधारणाऽपरपर्याया योगनाम्नोपदिष्टा विद्यते । वेदसंहितासु खल्वपि––

(१) युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियम् ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ।।

(२) युक्तेन मनसा वयं देवस्य सवितुः सवे ।
स्वर्ग्याय शक्त्या ।।

(३) युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ।।

(४) युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः ।। (ऋ०५।८१।१)

(५) युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोकएतु- पथ्येव सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ।। (यजु० ११।१-५)

(६) योगे योगे तवस्तरं वाजे वाजे हवामहे ।
सखाय इन्द्रमूतये ।।

(७) युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः ।
रोचन्ते रोचना दिवि ।। (अथर्व०२०।२६।१४)

(८) आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना ।
उप ब्रह्माणि नः शृणु ।।

(९) ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः ।
सुतावन्तो हवामहे ।। (अथर्व० २०।३८।२,३)

(१०) ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू ।

स्थिरं रथं सुखमिन्द्राधितिष्ठन् प्रजानन् विद्वानुपया हि सोमम् ।। (अथर्व० २०।८६।१)

---इत्येवमादयो मन्त्रा वर्णयन्ति यद् ये विप्रा मेधाविनो योगिनश्च पुरुषाः स्वशक्त्या (प्राणायामादिशास्त्रान्तरव्याख्यातक्रिययेत्यर्थो वा ग्राह्यः) ब्रह्मणि ---परमात्मनि स्वमनो समादधति, तेषामनुत्तमं स्वर्ग्यं दिव्यं मोक्षसुखं कैवल्यापरपर्यायं समुपजायत इति ।

ननु चेद् वेदे चित्तवृत्तिनिरोधात्मकस्य योगस्य मूलंवर्तते तर्हि समग्रस्य योगानुशासनस्य प्रकारस्तत्र कथं न प्रोक्तो येन योगस्य वैदिकसरणिमनुतिष्ठेयुर्मुमुक्षवः? अत्रोच्यते । कस्याप्यनुष्ठानस्य कर्मविशेषस्य वा साङ्गोपाङ्गोविधिर्मन्त्रसंहितासु नोक्तः । सर्वं हि विधिजातं कर्मकाण्डमधीतवेदैर्महर्षिभिः स्वप्रणीतेषु कल्पशास्त्रेषु श्रौत-गृह्यधर्मसूत्रेषु चान्वाख्यातं वरीवर्ति । वस्तुतः सत्यं मौलिकं च ज्ञानमल्पाक्षरेषु सूत्रात्मकेषु मन्त्रेषु परमेश्वरेण प्रदत्तमस्त्यतस्तत्र कस्यापि क्रियाविधो सविस्तरवर्णनस्याशंका न कार्य्या । किञ्च, विभिन्नविदुषां यानि विभिन्नानि काले काले समुपजातानि उपज्ञाख्यानि ज्ञानानि सन्ति, तेषामुपयोगेनापि नरेण स्वकार्यनिर्वाहः कार्य्यः—इत्येतद्रहस्यं खल्वपि तत्र भगवती श्रुतिः स्वयं प्रतिपादयति । तथा च मन्त्रवर्णाः—— "मनीषिणः प्रभरध्वं मनीषां यथा यथा मतयः सन्ति नृणाम् । इन्द्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ।। (ऋ०वे०१०।१११।१) इति । अस्मादेवहेतोस्तत्र योगानुशासनस्यापि पूर्णविधेरुल्लेखो नास्तीत्यवधेयम् । तथापि पातञ्जलयोगगतानि सुबहूनि तत्त्वानि वेदेषु दृष्टिगोचराणि भवन्ति; तद्यथा——

(१) तदा द्रष्टुः स्वरूपेऽवस्थानम् (यो०सू०१।३) "स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्जायते यथा कैवल्ये"–इति सूत्रस्यास्योपरि व्यासभाष्यवाक्यमस्ति । एतस्यार्थस्य मूलं "यत्र सर्वाणि भूतान्यात्मैवाभूद् विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (यजु० ४०।७) इति याजुषमन्त्रे निहितमवधेयम् ।

(२) श्रद्धावीर्य्यस्मृतिसमाधिपूर्वक इतरेषाम् (यो०सू०१।२०)——"उपायप्रत्ययो (श्रद्धाद्युपायहेतुको निर्बीजः समाधिरितिभावः) योगिनां भवति । श्रद्धा——चेतसः सम्प्रसादः, सा हि जननीव कल्याणी योगिनं पाति, तस्य हि श्रद्दधानस्य विवेकार्थिनो वीर्य्यमुपजायते, समुपजातवीर्यस्य स्मृतिरुपतिष्ठते, स्मृतिरुपस्थाने च चित्तमनाकुलं समाधीयते, समाहितचित्तस्य प्रज्ञाविवेक उपावर्त्तते, येन यथावद् वस्तु जानाति । तदभ्यासात् तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति ।" इति यां श्रद्धां निर्बीजसमाधेर्हेतुभूतां सूत्रकारभाष्यकारौ मन्येते सा हि वेदेषु बहुत्रोपवर्णितास्ति । तथा हि बाह्वृच्यवेदे——

श्रद्धयाग्निः समिध्यते श्रद्धयाहूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ।।
श्रद्धां देवा यजमाना वायुगोपा उपासते ।
श्रद्धां हृदय्ययाकूत्या श्रद्धया विन्दते वसु ।।
श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि ।
श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ।।
(ऋ०वे०१०।१५१।१,४,५)

इत्येवमाद्यृक्षु श्रद्धाया महत्त्वमुपयोगित्वं च प्रकटीकृतं विद्यते । 'अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्येप्रजापतिः ।' श्रद्धया सत्यमाप्यते' इति याजुषमन्त्रेण (१९।७७,३०) खल्वपि सत्यस्य प्राप्तिकारणं श्रद्धा निगदितास्ति अत्रोद्धृतमन्त्रेषु 'वायुगोपा यजमाना

देवाः' इति पदत्रये 'वायुगोपाः' पदं विशेषणत्वेनो पात्तमस्ति यद्धि प्राणायामपरायणेषु योगिष्वेव संगच्छते यतो हि त एव वस्तुतो वायुगोपा वायोः श्वासप्रश्वासरूपस्य देहाभ्यन्तरे रक्षितारो निरोद्धारश्च बोभूयन्ते नान्ये ।

(३) ईश्वरप्रणिधानाद्वा (यो०सू० १।२३)—"प्रणिधानाद्—भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णाति-अभिध्यानमात्रेण । तदभिध्यानादपि योगिन आसन्नतमः समाधिलाभः फलं च भवतीति'। अत्र सूत्रभाष्ये भक्तियोगस्य स्फुटोस्त्युल्लेखः । तदेतदीश्वरभक्तिविषयका मन्त्रा वेदेषु भूयशः सन्ति । सर्वः सामवेदो भगवद् भक्तिपरोऽस्ति । अन्येष्वपि वेदेषु ईश्वरभक्तिद्योतका मन्त्राः समुपलभ्यन्ते। इह तु विस्तरभयात्स्थानाभावाच्च त्रिचतुरा-एवोदाह्रियन्ते—

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत् सत्यमङ्गिरः ।।

उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ।। (ऋ०वे० १।१।६,७)

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्यच्छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ।।

मा चिदन्यद् विशंसत सखायो मा रिषण्यत ।
इन्द्रमित् स्तोता वृषणं सचा सुते मुहुरुस्था च शंसत ।
(ऋ० ८।१।१)

अर्चतप्रार्चत प्रियमेधासोऽर्चत ।
अर्चन्तु पुत्रकाउत पुरं न धृष्णर्चवत ।।
अथर्व० २०।९२।५)

इत्येते मन्त्राः परमात्मनः(प्राणिनां कल्याणकृतो) भक्तिमुपासनां च मनुष्यैः कर्त्तव्यां प्रतिपादयन्ति ।

(४) क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ।। (यो०सू० १।२४)

(५) तत्र निरतिशयं सर्वज्ञबीजम् । (यो०सू०१।२५)

(६) (स एष)पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।
(यो.सू०१।२६)

(७) तस्य वाचकः प्रणवः ।(यो०सू० १।२७)

(८) तज्जपस्तदर्थभावनम् ।(यो०सू०१।२८)

इत्येतेषु सूत्रेषु ईश्वरस्य स्वरूपस्य, तद्वाचकपदस्य, तज्जपप्रकारस्य च वर्णनं विद्यते । तदेतत् सर्वं वेदमूलकमस्ति । तद्यथा योगे कर्मविपाकाशयैः क्लेशैश्चरहित ईश्वर उक्तस्तथैव वेदे खल्वपि निगदितम् । "सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ।। (यजु०४०।८)। 'अकामोधीरोऽमृतः स्वयम्भू रसेन तृप्तो न कुतश्चनोनः । तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ।। (अथ० १०।८। ४४) इत्येवमादिषु मन्त्रेषु । 'कविर्मनीषी' इति पदद्वयेन परमात्मनि निरतिशयं सर्वज्ञताबीजमस्तीति स्फुटमुक्तं भवति । 'ऋचोऽक्षरे परमेव्योमन् यस्मिन् देवा अधि विश्वे समोताः । यस्तन्न वेद किमृचा करिष्यति । य इत्तद् विदुस्त इमे समासते ।।' (ऋ० १।१६४।३९) ओ३म् खं ब्रह्म । (यजु० ४०।१७) । सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ।। (कठोपनिषद् १।२।१५) । 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ।। (मुण्डकोपनिषद् २।२।४) इत्येषु मन्त्रेषु परमेश्वरस्योम्पदवाच्यत्वं तज्जप प्रभावश्च सुतरां वर्णितो विद्यते ।

(९) मैत्रीकरुणामुदितोपेक्षाणां सुखदुःख-पुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् (यो० सू० १।३३)–"तत्र सर्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेद् दुःखितेषु करुणाम्–एवमस्यभावयतः शुक्लो धर्मउपजायते, ततश्च चित्तं प्रसीदति, प्रसन्न-मेकाग्रं स्थितिपदं लभते ।" इति सूत्रभाषयोसर्व-भूतानां कृते मैत्री वर्तितव्या येनान्ततोऽस्य साधकस्य चित्तमेकाग्रं स्यादिति यदुक्तं तदेतदमुष्य वेदमन्त्रस्या-नुवादरूपमेव––

"दृते दृंह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहं चक्षुषा सर्वाणि-भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ।। (यजु० ३६।१८) इति ।

अभयं मित्रादभयममित्रादभयं ज्ञातादभयं परोक्षात्
अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ।। (अथर्व०१९।१५।६) इति मन्त्रेऽपि निगदितं यत् सज्जनेन तथा व्यवहर्त्तव्यं यथा सर्वाणि मित्राण्यमित्राणि सर्वा दिशश्चाभयप्रदाः स्युरिति ।

(१०) ऋतम्भरा तत्र प्रज्ञा (यो० सू० १।४८) "तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति, अन्वर्था च सा, सत्यमेव बिभर्त्ति, न तत्र विपर्यासगन्धोऽप्यस्तीति ।' अत्रोक्ताया ऋतम्भरायाः प्रज्ञाया मूलं––"ये चित् पूर्व ऋतसाप ऋतावान ऋतावृधः । पितॄन् तपस्वतो यम तांश्चिदेवापि गच्छतात् ।।" (ऋ०वे०१०।१५।४), अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात् सत्यमुपैमि ।। (यजु० १।५) इत्यादिमन्त्रेषूह्यम् ।

(११) तपः स्वाध्यायेश्वरप्रणिधानानि क्रिया-योगः (यो०सू०२।१) "नातपस्विनो योगः । सि-ध्यति ह अनादिकर्मक्लेशवासना चित्रा . . .अशुद्धि-नन्तिरेण तपः सम्भेदमापद्यत इति तपस उपादानम् ।" इत्यत्रोक्तस्य तपसोऽपि मूलतो वर्णनं वेदेषु बहु-त्रोपलभ्यते । तद्यथा––

'तपसा ये अनाधृष्या तपसा ये स्वर्ययुः ।
तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात् ।।
(अथर्व० १८।२।१६) ।

भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुप-निषेदुरग्रे ।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उप संनमन्तु ।। (अथर्व०१९।४१।१)
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
अग्निर्मा तत्र नयत्वग्निर्मेधां दधातु मे । अग्नये स्वाहा ।। (अथर्व १९।४३।१) इत्येवमादयः ।

(१२) योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्ति-राविवेकख्यातेः । (यो० सू० २।२८) "योगाङ्गान्य-ष्टावभिधायिष्यमाणानि, तेषामनुष्ठानात् पञ्च-पर्वणो विपर्य्ययस्याशुद्धिरूपस्य क्षयः नाशः, तत्क्षये सम्यग् ज्ञानाभिव्यक्तिः । . . . योगाङ्गानुष्ठानमशु-द्धेर्वियोगकारणं यथा परशुश्छेद्यस्य, विवेकख्यातेस्तु प्राप्तिकरणं यथा धर्मः सुखस्य स" इति योगाङ्गानु-ष्ठानं तत्सदृशं च सर्वं श्रेष्ठं कर्म कथमशुद्धिं संछिद्य शुद्धिमातनोतीत्यस्य संकेतः––"स मृज्यते सुकर्म-भिर्देवो देवेभ्यः सुतः विदे यदासु संददिर्महीरपो वि गाहते ।। (ऋ० ९।९९।७)
इत्येतस्मिन् मन्त्रे निपुणं द्रष्टुं शक्यः ।

(१३) सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् । (यो०सू० २।३६). .अमोघाऽस्य वाग् भवति ।' इत्येतदर्थस्य मूलमस्मिन्नृङ्मन्त्रे द्रष्टुं शक्यते–– "शावमना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीलः । यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ।। (ऋ० १०।५५।६) ।

(१४) ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः (यो० सू० २।३८)--"यस्य लाभादप्रतिघान् गुणानुत्कर्षयति सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थोभवति।" इत्यत्रोक्तं ब्रह्मचर्यमाहात्म्यं वेदेष्वित्थं जेगीयते--

ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत । इन्द्रोह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ।। (अथर्व० ११।५।१९)

प्रजापतेरावृतो ब्रह्मणा वर्मणाऽहं कश्यपस्य ज्योतिषा वर्चसा च ।

जरदष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम् ।। (अथर्व० १७।१।२७)

इत्थं योगशास्त्रस्य रहस्यानि बहूनि वेदेषूपलभ्यन्ते । वस्तुते "युजमापन्ना ऋषयः" (--समाधि प्राप्ता इत्यर्थः) इति काशिकायां ७।१।७१ तम सूत्रस्य वृत्तौ प्रत्युदाहृतेन वचनेन विज्ञायते यद् ये ये ऋषित्वमापुस्तेते सर्वे योगिन आसन् । वेदेषु चर्षीणां तपोबलादिविषये बहूनि वर्णनानि सन्ति यथा हि कानिचिदिहाप्यस्माभिरुदाहृतानि । एतेन गम्यते यद् वेदसंहितासु प्रयुक्त ऋषिशब्द । योगीत्यर्थमपि प्रकटयतीति । किंबहुना--

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरातदा स्वयं तदन्तः करणेन गृह्यते ।।

इति सत्यार्थप्रकाशे समुदाहृतस्योपनिषच्छ्लोकस्य तुलना यदि ऋग्वेदीय पावमानसूक्तेन सह क्रियेत यत्र--

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र, माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

(ऋ० ९।११३।११)

इत्येवं प्रकारा मन्त्रा विद्यन्ते तर्हि प्राप्तिसिद्धि नामधेयस्य योगानुष्ठानफलस्य सम्बन्धे उभयत्र किमप्यन्तरं द्रष्टुं न शक्यम् । अतो वै सप्रमाणमेतदुच्यते वेदमातैषा योगरहस्यान्यपि प्रकाशयतीति ।

अथ कर्मयोगसम्बन्धेऽपि किञ्चिदुच्यते । कर्मकाण्डस्य मूलं यजुर्वेद उच्यते । तत्रादिमे मन्त्रे--'इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण इत्येन श्रेष्ठतमकर्मणामनुष्ठानाय प्रेरणां दत्त्वा वेदान्ते"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ।।" इत्यत्र मन्त्रेऽपि पुनः कर्मणां करणाय निर्देशं करोति जगदीश्वरः । अपि च, 'कृतं मे दक्षिणे हस्ते जयो मे सव्यआहितः' इत्येवमादिषु-अथर्ववेदीयमन्त्रेषु अन्येषु चापि मन्त्रेषु कर्मचोदना प्रदीयते । तदेतत् सर्वं कर्मयोगस्यैव शिक्षा वेदेऽस्तीत्यवधार्यम् ।

भक्तियोगस्य संक्षिप्तविवेचनं कृतमेव पूर्वम् । ज्ञानयोगस्यापि समुल्लेख ऋग्वेदीय ज्ञानसूक्ते--(दशममण्डलस्य एकसप्ततिमे सूक्ते) मन्त्रान्तरेषु च दरीदृश्यते । संन्यासयोगस्य नामतो निर्देशो यद्यपि वेदे नास्ति तथापि--

तपः श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषोऽव्ययात्मा ।। ( मुण्डकोपनिषत् १।२।११ )

इत्याद्यर्थमूलका मंत्रा वेदेऽनैकस्थलेषूपलभ्यन्ते । दिङ्मात्रमिहोदाह्रियते--

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।। (यजु० ३१।१८)

विद्यां चाविद्यां च यस्तद्वेदोभयं सह स अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।। इत्यलंविद्वद्वर्येषु । (यजु ४०।१४)

--०--

# वेद में योग

श्री वीरसेन, वेदश्रमी, वेद-विज्ञानाचार्य

वेद में समस्त विद्यायें बीजरूप से विद्यमान हैं। आत्मा एवं परमात्मा का योग व सम्मिलित ही परम योग है—सर्वश्रेष्ठ योग है अतः योग नाम से इस को ही प्रधान रूप से ग्रहण किया जाता है। ऐसे महत्वपूर्ण एवं रहस्यज्ञान का उपदेश वेद में अनेक रूप में विद्यमान है। 'कदा योगो भविष्यति' मन्त्रवाक्य योग के बारे में प्रश्न, जिज्ञासा उत्पन्न करता है और इस 'कदा' का उत्तर 'यदा' के द्वारा देना होगा।

प्रस्तुत लेख में पातञ्जल योग दर्शन के कतिपय सूत्रों का समावेश किन मन्त्रों में किया जा सकता है अथवा उन सूत्रों के आधारभूत मन्त्र कौन से माने जा सकते हैं—यह इस लेख में अतिसंक्षेप से समयाभाव से लिखा है। सूत्र और मन्त्रों का अर्थ तथा संगति विद्वान् पाठक स्वयं मननचिन्तन पूर्वक करने में समर्थ है——

१. अथयोगानुशासनम्——

(१) योगं प्रपद्ये। (अथर्व. १९।८।२)

(२) योगक्षेमो नः कल्पताम् (यजुः २२।२२)

२. योगश्चित्तवृत्तिनिरोधः—

चित्तिं जुहोमि मनसा घृतेन

(यजुः १७।७८)।

३. तदाद्रष्टुःस्वरूपेऽवस्थानम्——

(१) वेनस्तत्पश्यन्निहितं गुहासद्यत्र विश्वं भवत्येकनीडम्। (यजुः ३२।८)

(२) तस्ययोनिंपरिपश्यन्ति धीरा यस्मिन्हतस्थुर्भुवनानि विश्वा। (यजुः ३१।१९)।

४. वृत्तिसारूप्यमितरत्र——

(१) यज्जाग्रतोदूरमुदैतिदैवं तदु सुप्तस्य तथैवैति। दूरं गमं ज्योतिषांज्योतिरेकम्।

(यजुः ३४।१)।

(२) येन कर्माण्यपसोमनीषिणोयज्ञे कृण्वन्तिविदथेषुधीराः। (यजुः३४।२)।

५. वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः—

(१) क्लिष्ट वृत्तियों का परिणाम——

(१) वि मे कर्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं मे।

वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नु मनिष्ये॥

(ऋ. ६।९।६)

(२) अन्धन्तमः प्रविशन्ति (यजु. ४०।९)

(३) असुर्या नाम ते लोका अन्धेनतमसावृताः।

(यजु. ४०।३)।

(२) अक्लिष्टवृत्तियों का परिणाम——

(१) यत्प्रज्ञानमुतचेतो धृतिश्च यज्जोतिरन्तरमृतं प्रजासु। (यजुः३४।३)

(२) येनेदंभूतंभुवनं भविष्यत्परिगृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्त होता। (यजु.: ३४।४)।

(३) यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिताः। (यजुः३४।५)।

(४) सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते (यजुः ३४।६)।

६. अभ्यासवैराग्याभ्यां तन्निरोधः--

(१) व्रतंचरिष्यामि। (यजु. १।५)।

(२) दुरितानि परासुव। (यजुः ३०।३)।

(३) कुर्वन्नेवेहकर्माणि। (यजुः ४०।१)

(४) तपश्चैवास्तां कर्मचान्तर्महत्यर्णवे। (अथर्व. ११।८।६)।

७. स तु दीर्घकालसत्कारासेवितोदृढ़भूमिः--

(१) भूयिष्ठान्ते नमउक्ति विधेम। (यजु. ४०।१६)।

(२) कस्मैदेवाय हविषाविधेम। (यजु:१३।४)।

(३) महे च न त्वामद्रिवः परा शुल्काय देयाम्

८. क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः--

(१) सपर्यगाच्छुक्रमकायमव्रणमस्नाविर -शुद्धमपापविद्धम्। (यजु:४०।८)।

(२) अनश्नन्नन्यो अभिचाकशीति। (ऋ.)

९. सपूर्वेषामपि गुरुः कालेनानवच्छेदात्--

(१) एषोहदेवः प्रदिशोनुसर्वाः पूर्वोहजातः। (यजुः ३२।४)

(२) हिरण्यगर्भः समवर्त्तताग्रे भूतस्यजातः पतिरेक आसीत्। (यजु:१३।४)।

(३) याथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः। (यजु:४०।८)।

(४) बृहस्पते प्रथमंवाचो अग्रंयत्प्रैरतनामधेयं दधानाः। (ऋ. १०।७१।१)।

१०. तस्यवाचकः प्रणवः--

(१) सोसावादित्ये पुरुषः सोसावहम् (ओ३म् (यजुः ४०।१७)।

११. तज्जपः--

(१) ओम्प्रतिष्ठ। (यजुः २।१३)।

(२) ओ३म्। क्रतोस्मर। (यजुः ४०।१५)

(३) नामनाम्नाजोहवीमि। (अथर्व. १०।७।३१)।

१२. यथाभिमतव्यानाद्वा--

(१) प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणाप्रातरश्विना। प्रातर्भगं पूषणं ब्रह्मणस्पतिंप्रातःसोममुतरुद्रं हुवेम ॥ (यजुः ३४।२४।

(२) उरुः पृथुः सुभूर्भुव इति त्वोपास्महे वयम्। (अथर्व १३।४(६) १।

(३) अम्भोअमो महः सह इतित्वोपास्महे वयम्। अथर्व १३।)

(४) तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्रमाः (यजुः ३२।१)।

(५) शन्नोमित्रः शं वरुणः शन्नोभवत्वर्यमा। (यजुः ३६।६)।

१३. ततः प्रत्यक्चेतनाधिगमः--

(१) योसावादित्येपुरुषः सोसावहम्। (यजुः ४०।१७)।

(२) वायुरनिलममृतम् (यजुः ४०।१५)।

(३) उपस्थायप्रथमजामृतस्यात्मनात्मानमभि संविवेश। (यजुः ३२।११)।

(४) तदपश्यत्तदभवत्तदासीत्। (यजुः ३२। १२)।

—अन्तरायाभावश्च--

(१) विनाशेन मृत्युंतीर्त्वा-अविद्यया मृत्युं-तीर्त्वा--(यजु:४०।९-१२)।

(२) तत्रको मोहः कः शोक एकत्वमनुपश्यतः। (यजुः ४०।७)।

(३) दुरितानि परासुव (यजु: ३०।३) ।

(१४) योगांगानुष्ठानादशुद्धिक्षयेज्ञानदीप्तिराविवेकख्यातेः——

(१) इदमहमनृतात्सत्यमुपैमि। (यजु:१।५)

(२) दुरितानिपरासुव । यद्भद्रंतन्न आसुव। (यजु: ३०।३) ।

(३) युयोध्यस्मज्जुहुराणमेनः—अग्नेनयसुपथाराये । (यजु: ४०।१६) ।

(४) अविद्ययामृत्युंतीर्त्वा विद्ययामृतमश्नुते। (यजु: ४०।१४) ।

(१५) यमनियम आसन प्राणायाम प्रत्याहार-धारणाध्यानसमाधयोष्टावंगानि सार्वभौममहाव्रतम्——(यम-नियम) ।

(१) उपयामगृहोसि (यजु:५।३९) ।

(२) व्रतंकृणुत (यजु:४।११) ।

(३) व्रतंचरिष्यामि (यजु: १।५) ।

(४) व्रतमचारिषम् (यजु: २।२८) ।

(५) व्रतेनदीक्षामाप्नोति (यजु: १९।३०) ।

(१) यम-(१)अहिंसा--(१) माहिंसीः पुरुषं-जगत् (यजु:१६।३

(२) पशून्पाहि । (यजु: १।१) ।

(३) मित्रस्याहंचक्षुषासर्वाणिभूतानि समीक्षे । (यजु: ३६।१८) ।

(२) सत्य—— (१) इदमहमनृतात्सत्यमुपैमि । (यजु: १;५) ।

(२) अवोचाम महते सौभगाय सत्यम् ।(ऋ.८।५९।५)

(३) ऋतंवदिष्यामि सत्यंवदिष्यामि (तैत्तिरीय) ।

(३) अस्तेय– (१) मावस्तेन ईशत । (यजु: १।१) ।

(२) मा गृधःकस्यस्विद्धनम् । (यजु: ४०।१) ।

(४)ब्रह्मचर्य– (१) ब्रह्मचारीब्रह्मभ्राजत् – पृथिव्यां बहुरोचते । (अथर्व. ११।५।२४)

(२) ब्रह्मचर्येणतपसादेवामृत्यु-मुपाघ्नत । (अथर्व ११।५।१९) ।

(५)अपरिग्रह- (१) शतहस्त समाहरसहस्रहस्त संकिर । (अथर्व४।३।५२) ।

(२) वयं रायस्पोषस्य ददितारः स्याम । (यजु:७।१४) ।

(३) प्रत्युष्टाअरातयः । (यजु: १।७) ।

(२) नियम– (१)शौच——

(१) शुद्धाः पूता भवत

(२) वाचं ते शुन्धामि प्राणं ते शुन्धामि चक्षुस्ते शुन्धामि चरित्रांस्ते शुन्धामि । (यजु. ६।१४) ।

(३) शुचिरापूत एमि । (यजु: ४।२) ।

(२) सन्तोप–

(१) तेन त्यक्तेन भुंजीथाः । (यजु: ४०।१) ।

(२) मागृधः कस्यस्विद्धनम् । (यजु: ४०।१) ।

(३) तप——

(१) दीक्षातपसोस्तनूरसि । (यजु: ४।२)

(२) भृगूणामंगिरसांतपसातप्य-
ध्वम् । (यजु:१।१८) ।

(४) स्वाध्याय--

(१) देवस्य पश्य काव्यम् ।
(अथर्व ९।१०।९) ।

(२) पावमानीर्योअध्येति ।
(साम उ. ५।२।८।२) ।

(३) ओ३म् क्रतोस्मर ।
(यजु: ४०।१५) ।

(४) आधीतं च मे यज्ञेन कल्प-
न्ताम् । यजु:१८।२)) ।

(५) ईश्वरप्रणिधान--

(१) स्तुहिदेवं सवितारम् ।

(२) प्रजापतेनत्वदेतान्यन्यो -
विश्वाजातानिपरिता -
बभूव ।(ऋ. १०।१२१।१०)

(३) आसन–स्थिरसुखमासनम्---

(१) निषद्येमं यज्ञममिगृणीत ।
(यजु: १९।६२) ।

(२) आसीनासो अरुणीनामुपस्थे ।
(यजु: १९।६३) ।

(३) आसद्यास्मिन्बर्हिषिमादयध्वम्
(यजु: २।१२) ।

(४) निहोता सत्सिबर्हिषि
(साम पू. १११) ।

(४) प्राणायाम--श्वासप्रश्वासयोर्विच्छेद:--

(१) नसि वीर्याय प्राणस्य पन्था
अमृत: । (यजु: १९।९०)

(२) प्राणं ते शुन्धामि । (यजु:६।१४

(३) प्राणश्चमेऽपानश्चमेव्यान -
श्चमेऽसुश्चमे ।
(यजु: १८।२) ।

(५) प्रत्याहार--

(१) सं ते मनो मनसा संप्राणेन
गच्छताम् (यजु:६।१८)

(२) मनोमेधामग्निंप्रयुजं
स्वाहा । (यजु:११।६६)

(३) चित्तं विज्ञातमग्नि प्रयुजं
स्वाहा । यजु:११।६६)

(६) धारणा---देशबन्धश्चित्तस्य -
धारणा--

(१) तत्सवितुर्वरेण्यम्
यजु: ३६।३)

(२) अग्निमीडे पुरोहितम् ।
(ऋ. १।१।१) ।

(७) ध्यान एवं (८) समाधि---
तत्र प्रत्यैकतानता ध्यानम्--

(१) भर्गोदेवस्य धीमहि ।
(यजु: ३६।३) ।

(२) उद्वयं तमसस्परि स्व:
पश्यन्तउत्तरम् ।
देवं देवत्रा सूर्यमगन्मज्योति-
रुत्तमम् ।। (यजु:२०।२१)

(३) वेनस्तत्पश्यन्निहितं गुहा
सद्यत्र विश्वं भवत्येकनीडम् ।
(यजु: ३२।७) ।

# सम्पादकीय टिप्पण्यः

ज्ञानविज्ञाननिधिरयं वेदो न कस्यापि देशस्य सम्प्रदायस्य जाते र्वा धर्मग्रन्थोऽपितु त्रिसप्तात्मक विश्वरूपधारिणः सर्वज्ञस्य वाचस्पतेरपूर्वोऽयं ब्रह्मराशिरनादिकालान्मानवजातिं दिव्यतां प्रत्यारोहणाय प्रेरयन्नास्ते । तदाज्ञां शिरसि धृत्वा ये व्रतपरायणाः पवित्रात्मानस्तेषामेवायं महान् ग्रन्थ इति निश्चप्रचं वक्तुं शक्यते । यस्तन्न वेद किमृचा करिष्यतीति श्रौतवचनप्रामाण्यात् स्फुटमवगम्यते यज्जगज्ज्ञानमाध्यमेन ब्रह्मोपलब्धावेव वेदानां सारतत्त्वम् । ब्रह्मोपलब्धिश्च विना योगसाधनं न कथमपि सम्भवति । योगसाधनानि च वेदेषु पदेपदे दृग्गोचरीभवन्ति । अतो वेदेषु योगसाधनानां प्रमुखं स्थानमिति सुतरां सिद्धम् । ये च कर्मकाण्डस्य हीनतां निघ्नत्वं वा प्रतिपादयन्ति ते वेदोदितस्य कर्मणः रहस्यं सारगर्भितं स्वरूपं न विजानन्ति । एकस्यैव वस्तुनः कर्मब्रह्माभिधे पूर्वोत्तरनामनी द्वे पार्श्वे विद्येते । एकस्यैव निःश्रेण्याः सोपानद्वयम् । प्रथमसोपानारोहणानन्तरमेवोपरितने सोपाने समारोहणं सम्भवति : कथम् ? तदुच्यते, कर्मणः सम्बन्धः प्रकृतिसमुत्थजगता तदुत्पन्नदेहेन वा विद्यते, ब्रह्मणश्चात्मतत्त्वेन सह । भौतिकदेहमविगणय्यात्मतत्त्वोपलब्धिर्दुर्धटाऽसम्भवप्राया च । देहं शुद्धं पवित्रं निर्मलं च विधाय दिव्यत्वं च सुसम्पाद्य तद् द्वाराऽऽत्मज्योतिषः प्रसारो ब्रह्माण्डे सर्वत्र सुकरः सम्पद्यते । अणुरप्यात्मा विभुजयिते । कर्मकाण्डोऽविद्यायाः क्षेत्रं ब्रह्मकाण्डश्च विद्यायाः । विद्याविद्ये उभे उपादेये स्तः । जीवनेऽनयोः समन्वय एवान्धन्तमसमपहन्तुं समर्थः । योगदृष्ट्या विचारयामश्चेत् कर्मकाण्डाभिधं यद्यज्ञयागादि जातं तत् शरीरेन्द्रिय मनोबुद्ध्यन्तर्गतं विविधसाधनसंवलितं यौगिकक्रियावितानमेव प्रद्योतयति । ब्रह्मकाण्डश्चात्मतत्त्वस्योद्भावनं तदुपलब्धिश्चेति मन्तव्यम् । अतः किमायातम्—बाह्ययज्ञयागादयस्त्वन्तः प्रवृत्तानामध्यात्मसम्बन्धिक्रियाकलापानामेवानुकृतयः सन्ति । देहप्राणादिसम्बद्धयौगिकप्रक्रियाणामेव कर्मकाण्डान्तर्गतत्वं विभावनीयम् । अतो यज्ञायागादीनामध्यात्मक्षेत्रेऽपि व्याख्या विधातव्या, यथाऽस्माभिरन्यत्र प्रदर्शिता । अनेन कर्मकाण्डस्यापरिहार्यत्वं स्फुटं जायते । पुरातनी सा वेदव्याख्यासरणिर्महर्षिप्रणीतेषु ब्राह्मणग्रन्थेषु सुरक्षिता तिष्ठति । अधुना न कोऽप्यनुसरति तां निगूढामुच्चभूमिकास्थितां यौगिकीं सरणिम् । पुराकाले राज्ञां श्रेष्ठिप्रवराणां च साहाय्येन प्रेरणया च तेषां संस्कृतस्य शास्त्राणां च पठनं पाठनं सततं प्रचलतिस्म परम द्य ते विनष्टाः । अधुना भारतीयसर्वकारस्य नेतृवर्गाणां चैषां सुरक्षायै समुन्नत्यै च मनागपि रुचि र्न विलोक्यते । यच्च भारतीयविश्वविद्यालयेषु यथाकथञ्चिदेषामध्ययनमध्यापनं च प्रचलति, हन्त, तदांग्लभाषामाध्यमेन भाषावैज्ञानिकानां दृष्ट्या जायते । संस्कृतं संस्कृतेनैव स्वगुह्यं रूपं विवृणोति । वेदाश्चर्षीणां भाष्यैः स्वान्तर्निहितसारतत्त्वं गुह्यं प्रच्छन्नं च रहस्यं योगाध्वनिप्रवृत्तेभ्यः प्रकटयन्तीति-

बोध्यम् । तदेतत् सर्वं सुदूरमस्माभिः प्रतीयते यतो हि, आंग्लसंस्कृतिभाषाभ्यां निगडितं भारतीय-जनमानसम् । तदुच्छेदायास्माकमेष प्रयत्न आसीत् अत्रास्माभिः साफल्यं प्राप्तमिति तु न ब्रूमः पाठका एव तत्र प्रमाणम् । यै र्वेदविदैः प्रौढ़पाण्डित्यपूर्णाः रचनाः संप्रेष्य वयमनुगृहीतास्तेभ्यो धन्यवाद-राशयो वितीर्यन्तेऽस्माभिः । अन्ते वयमेतदपि स्व-कर्तव्यं मन्यामहे यत् लेखेषु प्रकटितविचाराणां सत्यासत्यनिर्णयाय लेखका एव प्रमाणभूता न वयम् ।

प्रिय पाठकवृन्द !

यह वेदयोगांक आपके समक्ष प्रस्तुत है । इसमें कोई शक नहीं कि इस अंक में वेद के कई प्रौढ विद्वानों के विद्वत्तापूर्ण लेख हैं पर कई लेख ऐसे भी हैं जिन्होंने वेदों को छूआ तक नहीं । उपनिषदों गीता तथा योगदर्शन आदि शास्त्रों में योग सम्बन्ध में बहुत कुछ कहा गया है । इन्हें आधार बनाकर तो बहुत कुछ लिखा जा सकता है, पर वेदों में योग के सम्बन्ध में क्या आता है ? उसकी क्या सीमा है? विद्यमान योग प्रणालियों से उसमें क्या भेद है इत्यादि अनेकों विचारणीय विषय हो सकते हैं। इस सम्बन्ध में हमारा प्रयत्न कहां तक सफल हुआ है यह निर्णय हम पाठकों के ऊपर ही छोड़ते हैं मौलिक लेख लिखना और विशेषकर वैदिक योग पर लिखना अतिदुष्कर है यह तो कोई प्रतिभासम्पन्न व्यक्ति ही भगवत् कृपा से लिख पाता है । ऐसे प्रतिभावान् विद्वानों, लेखकों का हम हार्दिक अभिनन्दन करते हैं । लेख में प्रकटित विचारों के प्रति लेखक ही प्रमाणभूत है सम्पादक नहीं । अन्त में परमप्रभु से हमारी प्रार्थना है कि हमारे अन्दर योगबुद्धि को जागरित करे ।

# साहित्य समीक्षा

## राजरत्न श्रीमान जी कालिदास मेहता स्मृति ग्रन्थ

प्रकाशक—राजरत्न श्री नानजी कालिदास मेहता स्मृति-ग्रन्थ सम्पादन समिति, आर्यकन्या गुरुकुल पो. बा. नं. १ पोरबन्दर (गुजरात)। पृष्ठसंख्या—१म खण्ड+२य खण्ड =११५२

श्रेष्ठिप्रवर स्व० श्रीमान श्री कालिदास मेहता की स्मृति में उनके पारिवारिक जनों ने यह विशाल स्मृति-ग्रन्थ प्रकाशित कराया है। यह स्मृति-ग्रन्थ दो खण्डों में विभक्त है। प्रथम खण्ड के ११ उपखण्ड हैं जिनमें कुछ निम्न प्रकार हैं——संवेदन-संस्मरण, संस्कृति, शिक्षण, धर्म, तत्त्वज्ञान, प्रकृति-दर्शन और प्रवास, तथा विज्ञान।

इसी भांति द्वितीय खण्ड—आयुर्वेद, इतिहास पुरातत्त्व, शिल्प और स्थापत्य, नृत्य नाट्य, चित्र, संगीत, साहित्य आदि १२ उपखण्डों में विभक्त है। इस स्मृति ग्रन्थ में विषय निर्वाचन तथा उपस्थापन अति सुन्दर रूप में प्रस्तुत किया गया है। स्मृति-ग्रन्थ में प्रकाशित लेख हिन्दी गुजराती तथा इंगलिश इन तीनों भाषाओं में निबद्ध है।

प्रायः सारे लेख प्रौढ़-पाण्डित्यपूर्ण तथा सारगर्भित हैं। भारतीय संस्कृति तथा साहित्य की यह अनुपम निधि चिरकाल तक सुरक्षित रखने योग्य है।

स्व० श्री मेहता जी पर वेद का यह वाक्य पूर्णरूप से चरितार्थ होता है कि 'शतहस्त समाहर सहस्रहस्त संकिर।'' उनका जीवन सादा तथा सरल था, वे कर्म में विश्वास रखने वाले तथा दृढ़निश्चयी थे। अर्थसमुद्र में डुबकी लगाते हुए भी पद्मपत्रमिवाम्भसः के समान अलिप्त थे। ऐसे महापुरुष का अभिनन्दन कर ग्रन्थ सम्पादन समिति तथा पारिवारिक जनों ने उनका समुचित श्राद्ध किया है ऐसे सर्वोत्तम ग्रन्थ के सम्पादन-कर्ता धन्यवाद के पात्र हैं।

## आध्यात्मिक मुनिभाष्य

भाष्यकर्ता—श्री स्वामी ब्रह्ममुनि परिव्राजक—विद्यामार्तण्ड।

पता—सार्वदेशिक आर्यप्रतिनिधि सभा दयानन्द भवन, (रामलीला मैदान) न्यू देहली १।

मूल्य १३)

स्वामी ब्रह्ममुनि ग्रन्थमाला का यह ७२वां पुष्प है। इससे पूर्व पूर्वार्चिक पर स्वामी जी महाराज का सुन्दर सर्वगुण सम्पन्न भाष्य प्रकाशित हुआ था और पत्रिका के समीक्षास्तम्भ में उसकी समीक्षा भी प्रकाशित हुई थी। स्वामी दयानन्द ने सामवेद को उपासना का वेद बतलाया है। सामवेद स्तुतिपरक है, स्तुति व उपासना में पुनरुक्ति दोष नहीं होता प्रत्युत गुण होता है। परन्तु कइयों का यह कहना है कि साम का सामत्व साम गान में है न कि अर्थ में। इसी करण साम को उद्गाता (उद्गान करने वाला) का वेद माना गया है। यह एक अत्यन्त विचारणीय प्रश्न है।

अर्थ की दृष्टि से देखें तो सामवेद का आध्यात्मिक अर्थ ही उपयुक्त है। स्वामी जी महाराज वेदों के प्रकाण्ड पंडित है । आर्य समाज में वेदों के ऐसे धुरन्धर विद्वान् एक प्रकार से नहीं हैं। विद्वानों व संन्यासियों के प्रति जो उपेक्षा भाव आर्यसमाज में दृष्टिगोचर होता है उसे देखते हुए यही प्रतीत होता है कि आर्यसमाज में सच्चे विद्वानों का अभाव हो जायेगा ।

पुस्तक के अन्त में स्वामी जी महाराज ने जो वक्तव्य दिया है और अपनी दयनीय स्थिति का चित्रण किया है वह बिल्कुल सही है। हम स्वामी जी महाराज का हार्दिक धन्यवाद करते हैं कि उन्होंने अनेकों विपरीत स्थितियों में भी वेद सम्बन्धी जो महान् साहित्य पैदा किया है, वह उनकी कर्तव्यबुद्धि का द्योतक है और सबके लिए अनुकरणीय है। सब वेद-प्रेमी आर्यजनों का यह कर्तव्य है कि वे सामवेद भाष्य के दोनों भागों को खरीद कर स्वामी जी महाराज की सहायता करें और अपने वेद ज्ञान की वृद्धि करें।

भगवद्दत्त

## बिन चशमें की आंख

लेखक--श्री स्वामी सत्यानन्द पुरी वेदान्ताचार्य, गुरुधाम आश्रम, संन्यास रोड, कनखल । मूल्य ६.०० ।

इसके लेखक हैं--वेदान्ताचार्य, स्वामी श्री सत्यानन्द पुरी । गुरुधाम, संन्यास रोड, कनखल । मुद्रक हैं--श्री सुरेशचन्द्र वैष्णव, मैनेजर--गुरुकुल कांगड़ी मुद्रणालय, हरिद्वार । स्वयं लेखक इसके प्रकाशक हैं।

लेखक ने इस पुस्तक में वेदान्त के शांकर सम्प्रदायानुसारी कतिपय सिद्धान्तों का विवेचन प्रस्तुत किया है। लेखक का विचार है, कि वे सिद्धान्त जिस रूप में शांकर सम्प्रदाय में अभिमत हैं, वह यथायथ नहीं है । उनमें कुछ संशोधन व सुझाव अपेक्षित हैं; और उनको लेखक ने मनोरञ्जक कल्पित कहानियों के द्वारा सरल सुगम भाषा में बहुत रुचिकर रीति पर प्रस्तुत किया है।

जहां तक समझ सका, लेखक वेदान्त के उसी सम्प्रदाय के अनुयायी हैं, जिसके सिद्धान्तों का विवेचन कर उसमें अपने उपयुक्त सुझाव दिये हैं। संभवतः इसी विशेषता को लक्ष्य कर प्रस्तुत पुस्तक को उक्त नाम दिया गया है । तात्पर्य है, लेखक ने सम्प्रदायानुगत विचारों व मन्तव्यों के रंगीन चश्मे को उतार कर स्वतन्त्र स्वच्छन्द आंखों से उन विचारों को देखा समझा है; और जो सचाई जंची, उसको निःशंक प्रकट किया है ।

निःसन्देह लेखक का यह साहसपूर्ण प्रयास अभिनन्दनीय है । इस प्रकार के विवेचन सचाई को ढूंढने में महत्त्वपूर्ण सहयोग देते हैं । देखना चाहिये, लेखक इस दिशा में कहां तक सफलता प्राप्त कर सका है । जिन सिद्धान्तों पर विवेचन प्रस्तुत किया गया है, उनमें से कुछ ये हैं--

१--दृष्टि-सृष्टिवाद, अथवा अजातिवाद ।

२--जागृत दशा स्वप्न के समान है ।

३--जगत् मिथ्या, तुच्छ, अलीक है ।

४--सुषुप्ति काल में जगत् लुप्त अथवा नष्ट हो जाता है, इत्यादि ।

पहले दो सिद्धान्तों की मान्यता पर अगले दो अवलम्बित हैं । विद्वान् लेखक का कहना है, कि

पहले दो सिद्धान्तों का जो स्वरूप वेदान्त के शांकर सम्प्रदाय में अभिमत है, वह ठीक नहीं है। तीन पात्रों में अलग-अलग रक्खा तप्त, शीत और सादा जल देखने मात्र से प्रतीति मात्र से वैसा है; ऐसी मान्यता सर्वथा निस्सार है। जल की विभिन्न पात्रों में वस्तुस्थिति वैसी है, उसी के अनुसार वह तप्त, शीत व सादा अनुभव होता है। इसलिये इसे दृष्टि-सृष्टि न कहकर 'सृष्टि-दृष्टि' कहना चाहिये। विचारक लेखक ने जाग्रत और स्वप्न का भी परस्पर भेद प्रतिपादित किया है। जाग्रत में अनुभूत पदार्थ स्वप्न पदार्थ के समान नहीं हैं। इसीलिये स्वप्न पदार्थों के समान जगत् को मिथ्या नहीं मानना चाहिये, अनित्य अवश्य है। सुषुप्ति में भी संसार नष्ट या लुप्त नहीं हो जाता। वहां वस्तुतः देखने वाला ही लुप्त या सुप्त रहता है, संसार तो तब भी अपनी स्थिति में वैसा ही बना रहता है। सुषुप्ति में संसार को नष्ट कहना ऐसा ही है, जैसे-कबूतर के आंख बन्द कर लेने पर सामने बैठी बिल्ली को मरा समझ लिया जाय।

जहां तक पुस्तक के नाम-करण का आधार विचार में आता है, कोई ऐसा बुद्धिजीवी व्यक्ति अतीत व वर्त्तमान का दृष्टि में नहीं आया, जिसकी बुद्धि या विचार की आंखों पर रंगीन चश्मा न लगा हो। प्रयत्न के बा-वजूद विद्वान लेखक भी अपने आप को इससे अछूता नहीं रख सका।

अपने 'प्राक्कथन' के पृष्ठ १६ पर लेखक लिखता है--

'जैसे किसी बीज से वृक्ष, समुद्र से तरंग, पृथिवी से पार्थिव पदार्थ उत्पन्न होते हैं; ठीक उसी प्रकार सर्वात्मा रूप आदि बीज ब्रह्म से यह संसार वृक्ष बना है।'

ये पंक्तियां इस बात के ज्वलन्त प्रमाण हैं, कि लेखक की विचार-चक्षुओं पर गहरा रंगीन चश्मा लगा है। यदि लेखक का इस सिद्धान्त में विश्वास है, और इसे मान्यता देनी चाहिये; तो पुस्तक का समस्त विवेचन बेकार हो जाता है। इस मान्यता को अंगीकार कर दृष्टि-सृष्टिवाद स्वप्न के समान जाग्रत, और जगत् को मिथ्या मानना ही होगा। यदि बीज से वृक्ष के समान ही ब्रह्म से जगत् की उत्पत्ति है, तो ब्रह्म को परिणामी होने से बचाया नहीं जा सकता। दृष्टि सृष्टि वाद, स्वप्न आदि के दृष्टान्त और जगत् को प्रतीति मात्र मिथ्या मानना ये सब उसे बचाने के लिये बाड़ खड़ी (कण्टक शाखा आवरण) की गई हैं।

लेखक के साहस व स्वतन्त्र विचार की प्रवृत्ति का हार्दिक अभिनन्दन है। प्रत्येक विचारशील व्यक्ति को यह पुस्तक पढ़ने के लिये साग्रह निवेदन है।

उदयवीर शास्त्री
(गाजियाबाद)

# कुलपति की डायरी

**श्री ब्र० धर्मवीर एम० ए० (संस्कृत द्वितीयवर्ष )**

१ फरवरी, गुरुकुल : विश्वविद्यालय इतिहास विभाग द्वारा समायोजित पारितोषिक वितरण समारोह में भाग लिया व अध्यक्षता की।

२ फरवरी, दिल्ली : विश्वविद्यालय के कार्यार्थ सम्बद्ध अधिकारियों से भेंट की।

३ फरवरी, हांसी : नेहरू कालेज हांसी में समायोजित प्रान्तीय वाद-विवाद एवं गायन प्रतियोगिता समारोह की अध्यक्षता की एवं विजयी छात्रों को पुरस्कृत किया।

१० फरवरी, छपरौली : विद्यामन्दिर इण्टर कालेज छपरौली में भाषण दिया।

१५ फरवरी, गुरुकुल : विद्या सभा भवन में समायोजित राष्ट्रिय छात्र सेना के वार्षिक सत्र समापन समारोह में भाग लिया और छात्रों व अधिकारियों को सम्बोधित किया।

१७ फरवरी, गुरुकुल : विश्वविद्यालय के वनस्पति-विज्ञान विभाग द्वारा समायोजित परिसंवाद गोष्ठी में भाग लिया व उद्घाटन भाषण दिया।

१८ फरवरी, गुरुकुल : आर्यसमाज मन्दिर, गुरुकुल के साप्ताहिक सत्संग में सम्मिलित हुए और "वर्तमान युग में आर्यसमाज की आवश्यकता" विषय पर सदस्यों को सम्बोधित किया।

२४ फरवरी, गुरुकुल : विश्वविद्यालय के मनोविज्ञान एवं इतिहास विभाग के संयुक्त तत्त्वावधान में समायोजित अस्पृश्यता निवारण संगोष्ठी का उद्घाटन किया।

२८ फरवरी, दिल्ली : शिक्षा कृषि-स्वास्थ्य मन्त्रालय के सम्बद्ध अधिकारियों से भेंट की।

४ मार्च, गुरुकुल झज्जर : प्राचीन आर्ष पद्धति के एकमात्र प्रशिक्षण केन्द्र, प्रसिद्ध विद्या संस्थान गुरुकुल झज्जर के वार्षिक समारोह में सम्मिलित हुए। और उपस्थित आर्य जनता को सम्बोधित किया।

५ मार्च, दिल्ली : दिल्ली विश्वविद्यालय के शिवाजी कालेज में "संस्कृत का भारतीय भाषाओं और साहित्य पर प्रभाव" विषय पर भाषण दिया।

८ मार्च गुरुकुल : इंगलिश लिटरेरी एसोसिएशन के संयोजन में सम्पन्न विशिष्ट व्याख्यान समारोह की अध्यक्षता की और वक्ता महोदय का परिचय दिया व धन्यवाद ज्ञापन किया।

९ मार्च, दिल्ली : विभिन्न अधिकारियों से भेंट की।

१० मार्च, नरेला : आर्यसमाज नरेला के वार्षिकोत्सव में सम्मिलित हुए व जनता को सम्बोधित किया।

११ मार्च, गुरुकुल भैंसवाल : गुरुकुल विद्यापीठ के वार्षिक समारोह में उपस्थित हुए व जनता को सम्बोधित किया, संस्था के अधिकारियों से प्रगति पर विचार विमर्श किया।

१२ मार्च, दिल्ली : हिन्दी राज्यों के समस्त विश्वविद्यालयों के कुलपतियों की हिन्दी पुस्तकों

के सम्बन्ध में विज्ञान भवन में हुई बैठक में भाग लिया ।

शिक्षा मन्त्रालय के अधिकारियों से भेंट की ।

१४ मार्च, गुरुकुल : इन्टर विज्ञान विद्यालय के विदाई समारोह में भाग लिया ।

२३ मार्च, गुरुकुल : विश्वविद्यालय परिसर के सन्निकट समायोजित कृषक मेले में उद्घाटन भाषण दिया ।

२४ मार्च, गुरुकुल : विश्वविद्यालय की वित्त समिति की बैठक में सम्मिलित हुए व बैठक की अध्यक्षता की ।

२५ मार्च, गुरुकुल : कृषक मेले के समापन समारोह में भाग लिया ।

विश्वविद्यालय की कार्यकारी परिषद् व प्रबन्ध समिति की बैठक में भाग लिया ।

२७ मार्च, विश्वविद्यालय द्वारा समायोजित निबन्ध प्रतियोगिता के विजयी छात्रों को पुरस्कार प्रदान किया व समारोह की अध्यक्षता की ।

२७ मार्च, गुरुकुल : विद्यालय विभाग के विदाई समारोह में सम्मिलित हुए व छात्रों को आशीर्वाद प्रदान किया ।

२८ मार्च, दिल्ली : स्वास्थ्य मन्त्रालय के अधिकारियों से भेंट की ।

३० मार्च, गुरुकुल : कृषि राज्य-मन्त्री भारत सरकार श्री प्रो० शेरसिंह जी का स्वागत किया व विश्वविद्यालय की प्रगति से उन्हें परिचित कराया ।

३१ मार्च, गुरुकुल : प्रातः हिन्दी विभाग के विदाई समारोह में सम्मिलित हुए ।

मध्यान्ह–परीक्षा समिति की बैठक में भाग लिया ।

# गुरुकुल समाचार

ब्रह्मचारी धर्मवीर एम. ए. ( संस्कृत द्वितीय वर्ष )

## इतिहास विभाग में पारितोषिक वितरण समारोह—

विगत मास इतिहास विभाग द्वारा समायोजित सांस्कृतिक समारोह में उत्तम स्थान प्राप्त करने वाले छात्रों को उनकी श्रेष्ठ कला के लिए पुरस्कृत किया गया। १ फरवरी ११ बजे वेद मन्दिर में यह विशिष्ट समारोह कुलपति श्री रघुवीरसिंह जी शास्त्री की अध्यक्षता में सम्पन्न हुआ। पुरस्कार वितरण श्रीमती शास्त्री जी ने अपने करकमलों द्वारा किया। सर्वश्रेष्ठ कलाकार के रूप में श्रीकण्ठ शर्मा को कुलपति जी ने विशेष रूपेण पुरस्कृत किया।

समारोह का संयोजन श्री जबरसिंह संगर प्रवक्ता इतिहास विभाग ने किया। समारोह की सफलता के लिए श्री शास्त्री जी ने विभाग के प्राध्यापकों व छात्रों की सराहना की, श्री विनोदचंद्र जी अध्यक्ष इतिहास विभाग द्वारा आभार प्रदर्शन व धन्यवाद के साथ समारोह सम्पन्न हुआ।

## वेद एवं कला महाविद्यालय राष्ट्रीय छात्र सेना विभाग द्वारा सत्र समापन समारोह सम्पन्न—

१५ फरवरी को अपराह्न में विद्यासभा भवन में यह समारोह आयोजित किया गया। प्रथम श्री कुलपति जी की अनुमति से ले० श्री वीरेन्द्र अरोडा द्वारा इस वर्ष का वार्षिक विवरण एवं प्रगति आख्या प्रस्तुत की गयी, उत्साही छात्रों को पुरस्कृत व प्रशंसित किया गया गत वर्ष एन.सी.सी. परीक्षा उत्तीर्ण करने वाले निम्न छात्रों को प्रमाण-पत्र प्रदान किए गये श्री मदनलाल, श्री बुद्धदेव, श्री सत्यवीर, श्री गणेश।

कर्नल नौनिहालसिंह ने गुरुकुल विभाग की कार्यतत्परता की प्रशंसा करते हुए छात्रों को उनकी कर्त्तव्य निष्ठा के लिए बधाई दी।

अन्त में कुलपति जी ने छात्रों के उज्ज्वल-भविष्य के लिए शुभकामना प्रकट की और अधिकारियों द्वारा भविष्य में अधिक अच्छा प्रयास किया जायेगा ऐसी आशा प्रकट की। संक्षिप्त जलपान के साथ समारोह सम्पन्न हुआ।

## विज्ञान विभाग द्वारा परिसंवाद का समायोजन—

१७ फरवरी को विश्वविद्यालय के वनस्पति विज्ञान विभाग के तत्त्वावधान में विश्वविद्यालय अनुदान आयोग के सहयोग से एक परिसंवाद 'मानव-कल्याण में पौधे' विषय पर आयोजित किया गया।

इस परिसंवाद गोष्ठी में, अनेक विश्वविद्यालयों के वैज्ञानिक विद्वानों के अतिरिक्त, भारतीय कृषि अनुसन्धान संस्थान दिल्ली, इन्डियन ड्रग्स एण्ड फार्मेस्टिकल लिमिटिड ऋषिकेश आदि से ५० से अधिक वैज्ञानिकों ने भाग लिया इस परिसंवाद का उद्घाटन कुलपति श्री रघुवीरसिंह जी शास्त्री ने किया तथा अध्यक्षता का गुरुतर भार श्री गिरि-

राजसिंह सरोही–अध्यक्ष पादपशरीर क्रिया विज्ञान कृषि अनुसन्धान संस्थान दिल्ली ने वहन किया। उद्घाटन भाषण करते हुए श्रीशास्त्री जी ने वैज्ञानिकों का ध्यान पोषक तत्व के रूप में पौधों से प्रोटीन को अधिक मात्रा में कैसे प्राप्त किया जावे इसके सरल उपाय खोजने चाहिये।

इस परिसंवाद में, मटर से उर्वरता–पी०आर० महादेवन् ऋषिकेश, गुगुल से रक्त चाप में लाभ–डा० विनोदप्रकाश पान के गुण–डा० राजेन्द्र-कुमार, प्रकाश संश्लेष–डा० जी० एस० सरोही ए.के.श्री वास्तव, तुरई की अधिक उपज-एम.पी. कौशिक मु. नगर हैजे की दवा मदार–श्री वैद्य रामनाथ अध्यक्ष द्रव्यगुण विभाग आदि विद्वानों ने विभिन्न विषयों पर अपने मौलिक अनुसन्धान पूर्ण विचार प्रस्तुत किए।

इस गोष्ठी का संयोजन श्री विजय शंकर अध्यक्ष वनस्पति विज्ञान विभाग ने किया।

इस सफल समायोजन के लिए हम पाठकों की ओर से विभाग को बधाई देते हैं।

## अस्पृश्यता निवारण संवाद गोष्ठी––

विश्वविद्यालय के इतिहास एवं मनोविज्ञान विभाग के संयुक्त प्रयास से २४ फरवरी को विद्यासभा भवन में अस्पृश्यता निवारण अभियान के सन्दर्भ में एक संवादगोष्ठी का आयोजन किया गया।

इस गोष्ठी का उद्घाटन कुलपति श्री शास्त्री जी ने किया और बतलाया कि अस्पृश्यता निवारण को सैद्धान्तिक व व्यावहारिक रूप में सफलता पूर्वक अपनाने वाली प्रथम राष्ट्रिय संस्था गुरुकुल आर्य-समाज है जिसने मानवता व राष्ट्रिय एकता के लिए अस्पृश्यता निवारण को अनिवार्य समझा।

इस गोष्ठी की अध्यक्षता मनोविज्ञान विभाग लखनऊ विश्वविद्यालय के अध्यक्ष श्री चन्द्र ने की, इनके अतिरिक्त इस गोष्ठी में डा० राजनारायण, भू० पू० अध्यक्ष मनोविज्ञान विभाग लखनऊ विश्व-विद्यालय, डा० एस. डी. सिंह मनोविज्ञान विभाग मेरठ विश्वविद्यालय ने भाग लिया।

इस गोष्ठी का संयोजन श्री ओम्प्रकाश मिश्र, श्री विनोदचन्द्र सिन्हा अध्यक्ष मनोविज्ञान व इति-हास विभाग ने किया।

## इंगलिश विभाग में विशिष्ट व्याख्यान––

८ मार्च को गुरुकुल विश्वविद्यालय की इंगलिश लिटरेरी एसोसियेशन के तत्त्वावधान में विद्यासभा भवन में शिवाजी कालेज दिल्ली विश्वविद्यालय के प्राचार्य श्री डा० तुलसीराम जी का व्याख्यान 'फंक्शन्स आफ पोयट्री, विषय पर सम्पन्न हुआ।

मान्य वक्ता ने अपने विस्तृत अध्ययन व गहन चिन्तन के परिणाम स्वरूप प्राप्त गम्भीर विचार, प्रवाहमयी सरल भाषा में इस प्रकार से उपस्थित किए कि सभी श्रोताओं ने स्वयं को बहुत लाभान्वित अनुभव किया।

अन्त में कुलपति श्री शास्त्री जी ने विद्वान् वक्ता का आभार प्रदर्शन किया और सभा समाप्त हुई, सभा का संयोजन श्री सदाशिव भगत अध्यक्ष इंगलिश विभाग ने किया और धन्यवाद ज्ञापन श्री प्रेमनारायण शुक्ल अध्यक्ष लिटरेरी एसोसि-येशन ने किया।

## निबन्ध प्रतियोगिता में विजयी प्रतियोगियों को पुरस्कार—

२७ मार्च को ११ बजे विद्या सभा भवन में गुरुकुल विश्वविद्यालय के इतिहास विभाग द्वारा

